श्रीः ।

श्रीवरदराजपण्डितविरचिता

# लघुसिद्धान्तकौमुदी ।

टिप्पणीभिः सूत्राणामकारादिकोशेन

च संवलिता ।



मूल्यं ८ आणकाः ।

श्रीः ।

श्रीवरदराजपण्डितविरचिता

# लघुसिद्धान्तकौमुदी ।

---

बालबोधार्थं

अनुवृत्त्यादिसूचकेन टिप्पणेन प्रत्याहार–वर्णव्यवहारज्ञापक-
कोष्टकैः सूत्राणामकारादिवर्णक्रमसूच्या च संवलिता
गुञ्जीकर इत्युपाख्येन भिकुदेवसूनुरामचन्द्रशर्मणा
संस्कृता च ।

तस्या इयं द्वादशावृत्तिः

## पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजनुषा
## वासुदेवशर्मणा संशोधिता

सैषा

**मुम्बय्यां**

**पाण्डुरङ्ग जावजी**

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये
मुद्रयित्वा प्रकाशिता ।

---

शकाब्दाः १८५५, खिस्ताब्दाः १९३३. 1933

# पाठकानां सूचना.



स्थूलाक्षरेण सूत्राणामस्मिन्ग्रन्थे निवेशनम् ।
अध्यायपादसूत्राणां संख्याङ्कस्थापनं ततः ॥ १ ॥

अध्यायसंख्या प्रथमात्पादसंख्या द्वितीयतः ।
तार्तीयीकाङ्कतो ग्राह्या सूत्रसंख्येति निर्णयः ॥ २ ॥

कात्यायनकृतं यच्च वार्तिकं मध्यभागतः ।
धनुराकारचिह्नाभ्यां पार्श्वयोर्विशदीकृतम् ॥ ३ ॥

सूत्राणामनुवृत्त्यादिटिप्पणीस्तत्र तत्र च ।
निवेश्य पृष्ठाधोदेशे व्युत्पित्सूनां मुदे परम् ॥ ४ ॥

प्रत्याहारप्रसंख्यानकोष्टकं प्राक्प्रयोजितम् ।
वर्णसंज्ञादिनियमकोष्टकाद्यङ्कनं ततः ॥ ५ ॥

सौकर्याय च सर्वेषामन्तेऽकारादिवर्णतः ।
सूत्राणां पृष्ठनिर्देशसूच्यकारि प्रयत्नतः ॥ ६ ॥

मनीषिणः सहृदयान्क्षमध्वमिति चासकृत् ।
अभ्यर्थयामः स्खलितं शोधयन्तु दयालवः ॥ ७ ॥



श्रीः ।

# लघुकौमुदीस्थप्रकरणानुक्रमः ।

# प्रत्याहाराणामकारादिक्रमेण परिसंख्या ।

| | | | | | |
|---|---|---|---|---|---|
| १ अक् | ८ अश् | १५ ऐच् | २२ जश् | २९ भष् | ३६ रल् |
| २ अच् | ९ इक् | १६ खय् | २३ झय् | ३० मय् | ३७ वल् |
| ३ अट् | १० इच् | १७ खर् | २४ झर् | ३१ यञ् | ३८ वश् |
| ४ अञ् | ११ इण् | १८ ङम् | २५ झल् | ३२ यण् | ३९ शर् |
| ५ अण् | १२ उक् | १९ चय् | २६ झश् | ३३ यम् | ४० शल् |
| ६ अम् | १३ एङ् | २० चर् | २७ झष् | ३४ यय् | ४१ हल् |
| ७ अल् | १४ एच् | २१ छव् | २८ बश् | ३५ यर् | ४२ हश् |

सूत्रनियमादन्येऽपि प्रत्याहाराः स्युस्तथापि केवलमत्रोपात्तानामेव संग्रहः ।

# अचामष्टादशभेदविवरणम् ।

| अ इ उ ऋ ऌ | अ इ उ ॠ ए ओ ऐ औ | अ इ उ ऋ ऌ ए ओ ऐ औ |
|---|---|---|
| ह्रस्वभेदाः । | दीर्घभेदाः । | प्लुतभेदाः । |
| १ उदात्तानुनासिकः | ७ उदात्तानुनासिकः | १३ उदात्तानुनासिकः |
| २ उदात्ताननुनासिकः | ८ उदात्ताननुनासिकः | १४ उदात्ताननुनासिकः |
| ३ अनुदात्तानुनासिकः | ९ अनुदात्तानुनासिकः | १५ अनुदात्तानुनासिकः |
| ४ अनुदात्ताननुनासिकः | १० अनुदात्ताननुनासिकः | १६ अनुदात्ताननुनासिकः |
| ५ स्वरितानुनासिकः | ११ स्वरितानुनासिकः | १७ स्वरितानुनासिकः |
| ६ स्वरिताननुनासिकः | १२ स्वरिताननुनासिकः | १८ स्वरिताननुनासिकः |

# आभ्यन्तरबाह्यप्रयत्नज्ञानार्थकं कोष्टकम्।

| आभ्यन्तरप्रयत्नाः | स्पृष्टाः | | | ईषत्स्पृष्टाः | ईषद्विवृताः | विवृताः | संवृतः |
|---|---|---|---|---|---|---|---|
| संज्ञाः | स्पर्शाः | | | अन्तःस्थाः | ऊष्माणः | स्वराः<br>उदात्तानुदात्तस्वरिताः | |
| व्यञ्जनानि स्वराश्च | क ख<br>प फ<br>च छ<br>ट ठ<br>त थ | ग ङ<br>ब म<br>ज ञ<br>ड ण<br>द न | घ<br>भ<br>झ<br>ढ<br>ध | य<br>व<br>र<br>ल | श<br>ष<br>स ह | अ इ ए<br>उ ओ<br>ऋ ऐ<br>ऌ औ | अ.<br>ह्रस्वः प्रयोगे |
| बाह्यप्रयत्नाः | अ.प्रा.म.प्रा.<br>विवार<br>श्वास<br>अघोष | अल्प.प्रा.<br>संवार<br>नाद<br>घोष | म.प्रा.<br>संवार<br>नाद<br>घोष | अल्प.<br>संवार<br>नाद<br>घोष | म. प्रा.<br>विवार सं.<br>श्वास ना.<br>अघोष घो. | अल्पप्राण<br>संवार<br>नाद<br>घोष | अल्प.<br>संवार<br>नाद<br>घोष |

# वर्णोद्भवस्थानकोष्टकम्।

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| अ | इ | ऋ | ऌ | उ | ञ | | | | | |
| क | च | ट | त | प | म | ए | ओ | व | ×क | ं |
| ख | छ | ठ | थ | फ | ङ | ऐ | औ | | | |
| ग | ज | ड | द | ब | ण | | | | | |
| घ | झ | ढ | ध | भ | न | | | | | अनु. |
| ङ | ञ | ण | न | म | | | | | | |
| ह | य | र | ल | ×प | | | | | | |
| : | श | ष | स | | | | | | | |
| कंठः | तालु | मूर्धा | दंताः | ओष्ठौ | नासिका | कं. ता. | कं. ओ. | दं. ओ. | जि. मू. | नासिका |

---

॥ श्रीः ॥

# लघुसिद्धान्तकौमुदी ।

॥ श्रीगणेशाय नमः ॥

नत्वा सरस्वतीं देवीं शुद्धां[1] गुण्यां[2] करोम्यहम् ।
पाणिनीय[3]प्रवेशाय लघु[4]सिद्धान्तकौमुदीम् ॥ १ ॥

## ॥ अथ संज्ञाप्रकरणम् ॥

**अइउण् १ ऋऌक् २ एओङ् ३ ऐऔच् ४ हयवरट् ५ लण् ६ ञमङणनम् ७ झभञ् ८ घढधष् ९ जबगडदश् १० खफछठथचटतव् ११ कपय् १२ शषसर् १३ हल् १४** इति माहेश्वराणि[5] सूत्राण्य[6]णादिसंज्ञार्थानि । एषाम[7]न्त्या

---

१ दोषरहितामित्यर्थः । इदं कौमुदीविशेषणम् ॥ २ प्रशस्ता गुणा यस्याः सा ताम् । ( शब्दव्युत्पत्तिज्ञानादिप्रशस्तबहुगुणवतीमित्यर्थः ) ॥ ३ पाणिनिना प्रोक्तं पाणिनीयं महाव्याकरणं तस्मिन् बुद्धेः प्रवेशार्थमित्यर्थः ॥ ४ लघ्वी चासौ सिद्धान्तकौमुदी चेति ताम् । ( ग्रन्थसङ्ख्यया स्वल्पामपि बहुशब्दसिद्धान्तप्रकाशिकामित्यर्थः ) ॥ ५ महेश्वरादागतानि माहेश्वराणि । ( ताण्डवनृत्यसमये महेश्वरस्य डमरोः सकाशादुत्पन्नानीत्यर्थः ) ॥ ६ अण् आदिर्यासां ता अणादयः । अणादयश्च ताः संज्ञाश्च ताभ्यः इमानि अणादिसंज्ञार्थानि । अर्थेन सह नित्यसमासो विशेष्यलिङ्गता च । अत्र च 'अइउण्' इत्यत्र अकारादिणकारपर्यन्तानां अइउवर्णानां यः संक्षेपेण संग्रहः सोऽण् । ( अण् प्रत्याहार इत्यर्थः ) । एवमग्रेऽप्यूह्यम् । आदिशब्देन 'इण्' 'अक्' इत्यादयो ग्रहीतव्याः । ( इण् प्रत्याहारस्तु लण्सूत्रस्थेन णकारेण सहैव ग्राह्यः ) ॥ ७ अन्ते भवा अन्त्याः 'ण् क् ङ्' इत्यादयः ॥

[1]इतः । [2]हकारादिष्वकार उच्चारणार्थः । लण्मध्ये त्वित्संज्ञकः ॥ **हलन्त्यम्** ।१।३।३। उपदेशेऽन्त्यं हलित्स्यात् । उपदेश [3]आद्योच्चारणम् । सूत्रेष्वदृष्टं पदं [4]सूत्रान्तरादनु[5]वर्तनीयं सर्वत्र ॥ **अदर्शनं लोपः** ।१।१।६०। प्रसक्त[6]स्यादर्शनं लोपसंज्ञं स्यात् ॥ **तस्य लोपः** ।१।३।९। [7]तस्येतो लोपः स्यात् । [8]णादयो[9]ऽणाद्यर्थाः ॥ **आदिरन्त्येन सहेता** ।१।१।७१। [10]अन्त्येने[11]ता सहित आदि[12]र्मध्यगानां [13]स्वस्य च संज्ञा स्यात् । यथा—अणिति अइउवर्णानां संज्ञा । [14]एवमक् अच् [15]हल् [16]अलित्यादयः ॥ **ऊकालोऽज्झ्रस्वदीर्घप्लुतः** ।१।२।२७। उश्च ऊश्च ऊ३श्च वः । [17]वां [18]काल इव [19]कालो यस्य सोऽच् क्रमाद्ध्रस्वदीर्घप्लुतसंज्ञः स्यात् । [20]स प्रत्येकमुदात्तादिभेदेन त्रिधा ॥ [21]**उच्चैरुदात्तः** ।१।२।२९। [22]**नीचैरनुदात्तः** ।१।२।३०। **समाहारः** [23]**स्वरितः** ।१।२।३१। [24]स नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वा-

---

१ इत्संज्ञकाः ॥ २ 'हयवरट्' इत्यादिषु ॥ ३ आद्याः शंकरपाणिन्यादयः तैः कृतं डमरुमुखादिद्वारोच्चारणम् ॥ ४ अष्टाध्यायीक्रमेण पूर्वोक्तादन्यसूत्रात् ॥ ५ अनुवृत्तिं कृत्वा ग्रहीतव्यम् ॥ ६ विद्यमानस्येत्यर्थः ॥ ७ इत्संज्ञकस्य ॥ ८ 'अइउण्' 'ऋऌक्' इत्यादिषूक्ताः 'ण् क्' इत्यादयः ॥ ९ 'अण् अक्' इत्यादिप्रत्याहारप्रयोजनाः ॥ १० अन्ते भवेन 'ण् क्' इत्यादिना ॥ ११ इत्संज्ञकेन ॥ १२ 'इ उ' इत्यादीनाम् ॥ १३ अकारादेः ॥ १४ अकारादिककारपर्यन्तवर्णसंग्रहरूपः प्रत्याहारोऽक्संज्ञकः ॥ एवमग्रेऽप्यूह्यम् ॥ १५ हकारादिलकारपर्यन्तम् ॥ १६ अकारादिलकारपर्यन्तम् ॥ १७ ह्रस्वदीर्घप्लुतानां पूर्वोक्तानां त्रयाणामुकाराणाम् ॥ १८ उच्चारणकाल इव ॥ १९ उच्चारणकालः ॥ २० ह्रस्वदीर्घप्लुतसंज्ञकः अच् ॥ २१ ताल्वादिस्थानेषूर्ध्वभागे उत्पन्नः ॥ २२ ताल्वादिस्थानेष्वधोभागे उत्पन्नः ॥ २३ उदात्तानुदात्तत्वे वर्णधर्मौ समुच्चीयेते यस्मिन् सः ॥ २४ ह्रस्वादिभेदेन उदात्तादिभेदेन चोक्तः ॥

भ्यां द्विधा ॥ **मुखनासिकावचनोऽनुनासिकः ।१।१।८।** मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् । तदित्थम् । अइउऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः । ऌवर्णस्य द्वादश । तस्य दीर्घाभावात् । एचाम्[1]अपि द्वादश । तेषां ह्रस्वाभावात् ॥

**तुल्यास्यप्रयत्नं सवर्णम् ।१।१।९।** ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चैतद्द्वयं यस्य[2] येन[3] तुल्यं तन्मिथः[4] सवर्णसंज्ञं स्यात् ( ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम् ) । अकु[5]हविसर्जनीयानां[6] कण्ठः । इचु[7]यशानां तालु । ऋटु[8]रषाणां मूर्धा । ऌतु[9]लसानां दन्ताः । उपु[10]पध्मानीयानाम्[11]ओष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य[12] जिह्वामूलम् । नासिकाऽनुस्वारस्य ॥ यत्नो[13] द्विधा । आभ्यन्तरो बाह्यश्च । आद्यः पञ्चधा । स्पृष्ट[14]ईषत्स्पृष्ट[15]ईषद्विवृत[16]विवृत[17]संवृत[18]भेदात् । तत्र स्पृष्टं प्रयतनं स्पर्शानाम्[19] । ईषत्स्पृष्टमन्तःस्थानाम्—ईषद्विवृतमूष्मणाम् । विवृतं स्वराणाम् । ह्रस्वस्यावर्णस्य प्रयोगे[20] संवृतम् । प्रक्रियादशायां[21] तु विवृतमेव ॥ बाह्य[22]प्रयत्नस्त्वेकादशधा । विवारः

---

१ एच्प्रत्याहारस्थानां 'ए ओ ऐ औ' एषामित्यर्थः ॥ २ वर्णस्य ॥ ३ वर्णेन ॥ ४ परस्परम् ॥ ५ कुशब्देन 'क ख ग घ ङाः' ग्राह्याः ॥ ६ विसर्गसंज्ञकस्य ॥ ७ च छ ज झ ञाः ॥ ८ ट ठ ड ढ णाः ॥ ९ त थ द ध नाः ॥ १० प फ ब भ माः ॥ ११ ≍प≍फ इत्यादौ पफाभ्यां प्रागर्धविसर्गसदृशः ॥ १२ कखयोः पूर्वमर्धविसर्गसदृश इत्यग्रे वक्ष्यमाणस्य ॥ १३ प्रयत्नः ॥ १४ यस्योच्चारणे जिह्वाग्रादीनां कण्ठाद्यवयवेषु पूर्णः स्पर्शः स स्पृष्टप्रयत्नः ॥ १५ अत्यल्पस्पर्शे ईषत्स्पृष्टप्रयत्नः ॥ १६ उच्चारणकालेऽवयवानामत्यल्पविवरणे ईषद्विवृतः ॥ १७ पूर्णतया विवरणे विवृतः ॥ १८ अवयवानामाकुञ्चनहेतुः संवृतः ॥ १९ कादयो मावसाना इत्यग्रे स्पर्शा वक्ष्यन्ते ॥ २० वाक्ययोजनायाम् ॥ २१ व्याकरणरीत्या शब्दसाधनावस्थायाम् ॥ २२ वर्णोत्पत्तेः पश्चाज्जातः ॥

संवारः श्वासो नादोऽघोषो घोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति । खरो[1] विवाराः[2] श्वासा अघोषाश्च । हशः संवारा नादा घोषाश्च । वर्गाणां प्रथमतृतीयपञ्चमा यणश्चा[3]ल्पप्राणाः । वर्गाणां द्वितीयचतुर्थौ शलश्च[4] महाप्राणाः । कादयो[5] मावसानाः स्पर्शाः । यणोऽन्तस्थाः । शल ऊष्माणः । अचः[6] स्वराः । ᳵकᳵख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीयः । ᳵपᳵफ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः । अंअः इत्यचः परावनुस्वारविसर्गौ ॥ **अणुदित्सवर्णस्य चाप्रत्ययः ।१।१।६९।** प्रतीयते विधीयत इति प्रत्ययः । अविधीयमानोऽणुदिच्च सवर्णसंज्ञा स्यात् । अत्रैवा[7]ण् परेण णकारेण । कुचुटुतुपु एते उदितः । तदेवम् । अ इत्यष्टादशानां संज्ञा । तथेकारोकारौ । ऋकारस्त्रिंशतः । एवं ऌकारोऽपि । एचो द्वादशानाम् । अनुनासिकाननुनासिकभेदेन यवला[8] द्विधा । तेनाऽननुनासिकास्ते द्वयोर्द्वयोः संज्ञा ॥ **परः सन्निकर्षः संहिता ।१।४।१०९।** वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात् ॥ **हलोऽनन्तराः संयोगः ।१।१।७।** अज्भि[9]र[10]व्यवहिता हलः[11] संयोगसंज्ञाः स्युः ॥ **सुप्तिङन्तं पदम् ।१।४।१४।** सुबन्तं[12] तिङन्तं[13] च पदसंज्ञं स्यात् ॥ इति संज्ञाप्रकरणम् ॥

---

१ खर् प्रत्याहारः ॥ २ विवारप्रयत्नवन्तः ॥ ३ यण् प्रत्याहारः ॥ ४ शल् प्रत्याहारः ॥ ५ लोकप्रसिद्धपाठापेक्षमिदम् ॥ ६ अच् प्रत्याहारः ॥ ७ 'पूर्वेणैवाण्ग्रहाः सर्वे परेणैवेण्ग्रहा मताः । ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु' ॥ ८ यरलवर्णाः ॥ ९ स्वरसंज्ञकैर्वर्णैः ॥ १० व्यवधानरहिताः ॥ ११ हल्प्रत्याहारस्थवर्णाः ॥ १२ सु औ जस् इत्यादिप्रत्याहारस्था अग्रे वक्ष्यमाणाः प्रत्ययाः सुप्संज्ञकाः तेऽन्ते यस्य तत्सुबन्तं ( विभक्त्यन्तमित्यर्थः ) ॥ १३ तिप् तस् झि इत्यादिप्रत्याहारस्था अग्रे वक्ष्यमाणाः प्रत्ययास्तिङ्संज्ञास्तेऽन्ते यस्य तत्तिङन्तम् ॥

## ॥ अथाच्संधिप्रकरणम् ॥

**इको यणचि** ।६।१।७७। इकः स्थाने यण् स्यादचि संहितायां विषये । सुधी उपास्य इति स्थिते ॥ **तस्मिन्निति निर्दिष्टे पूर्वस्य** ।१।१।६६। सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम् ॥ **स्थानेऽन्तरतमः** ।१।१।५०। प्रसङ्गे सति सदृशतम आदेशः स्यात् । सुध् य् उपास्य इति जाते ॥ **अनचि च** ।८।४।४७। अचः परस्य यरो द्वे वा स्तो न त्वचि ॥ **झलां जश् झशि** ।८।४।५३। स्पष्टम् । इति धकारस्य दकारः ॥ **संयोगान्तस्य लोपः** ।८।२।२३। संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात् ॥ **अलोऽन्त्यस्य** ।१।१।५२। षष्ठीनिर्दिष्टोऽन्त्यस्यादेशः स्यात् । इति यलोपे प्राप्ते । (यणः प्रतिषेधो वाच्यः) । सुद्ध्युपास्यः, मध्वरिः, धात्रंशः, लाकृतिः ॥ **एचोऽयवायावः** ।६।१।७८। एचः क्रमादय् अव् आय् आव् एते स्युरचि ॥ **यथासंख्यमनुदेशः समानाम्** ।१।३।१०। समसंबन्धी विधिर्यथासंख्यं स्यात् । हरये, विष्णवे, नायकः, पावकः ॥ **वान्तो यि प्रत्यये** ।६।१।७९। यकारादौ प्रत्यये परे ओदौतोरवावौ स्तः । गव्यम्, नाव्यम् । (अध्वपरिमाणे च) । गव्यूतिः ॥ **अदेङ् गुणः** ।१।१।२। अदेङ् च गुण-

१ अव्यवर्णेन ॥ २ व्यवधानरहितस्य ॥ ३ एकवर्णस्थानेऽनेकादेशप्राप्तौ सत्याम् ॥ ४ यर् प्रत्याहारः ॥ ५ अनेकव्यञ्जनसमुदायः संयोगः तदन्तम् ॥ ६ षष्ठीविभक्तिप्रत्ययनिर्दिष्टः ॥ ७ एते (आदेशाः) ॥ ८ उक्तसंख्याक्रमेण ॥ ९ ओकारौकारयोः ॥ १० मार्गप्रमाणे ॥ ११ 'गव्यूतिः स्त्री क्रोशयुगम्' इत्यमरः ॥ १२ 'अ ए ओ' एते वर्णा इत्यर्थः ॥

संज्ञः स्यात् ॥ **तपरस्तत्कालस्य ।१।१।७०।** तः परो यस्मात्स च तात्पर[1]श्चोच्चार्यमाणसमका[2]लस्यैव संज्ञा स्यात् ॥ **आद्गुणः ।६।१।८७।** अवर्णादचि परे पूर्व[3]परयोरेको गुणादेशः स्यात् । उपेन्द्रः । गङ्गोदकम् ॥ **उपदेशेऽजनुनासिक इत् ।१।३।२।** उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् । प्रतिज्ञा[4]नुनासिक्याः पाणिनीयाः । लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा ॥ **उरण् रपरः ।१।१।५१।** ऋ इति त्रिंशतः संज्ञेत्युक्तं तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते । कृष्णर्द्धिः, तवल्कारः ॥ **लोपः शाकल्यस्य ।८।३।१९।** अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाशि परे ॥ **पूर्वत्रासिद्धम् ।८।२।१।** तेन सपादसप्ताध्यायीं प्रति त्रिपा[5]द्यसिद्धा त्रिपाद्या[6]मपि पूर्वं प्रति परं शास्त्रमसिद्धम्[7] । हर इह, हरयिह, विष्ण इह, विष्णविह ॥ **वृद्धिरादैच् ।१।१।१।** [8]आदैच्च वृद्धिसंज्ञः स्यात् ॥ **वृद्धिरेचि ।६।१।८८।** आदेचि परे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम्, गङ्गौघः, देवैश्वर्यम्, कृष्णौत्कण्ठ्यम् ॥ **एत्येधत्यूठ्सु ।६।१।८९।** अवर्णादेजाद्योरेत्येध[9]त्योरू[10]ठि च परे वृद्धिरेकादेशः स्यात् । उपैति, उपैधते, प्रष्ठौहः । एजाद्योः किम् । उपेतः, माभवान्प्रेदिधत् । ( अ-

---

१ वर्ण इत्यर्थः ॥ २ उच्चारणकालसदृशकालः न तु दीर्घप्लुतादिसवर्णग्राहकः ॥ ३ पूर्वपरयोर्वर्णयोः स्थाने ॥ ४ येषामित्संज्ञा कार्यानुसारतो दृश्यते ते एवानुनासिका इति गुरुपरंपराज्ञानेन कृतनिश्चया इत्यर्थः ॥ ५ त्रयः पादा यस्याः सा त्रिपादी ( सूत्रपाठेऽष्टमाध्यायस्यान्तिमास्त्रयः पादा इत्यर्थः ) ॥ ६ प्रतिसूत्रमिति शेषः ॥ ७ तस्य प्राप्तावपि तत्पूर्वशास्त्रदृष्ट्या तन्न दृश्यत इत्यर्थः ॥ ८ 'आ ऐ औ' इत्येते वर्णाः ॥ ९ 'इण् गतौ' 'एध वृद्धौ' इत्येतयोः ॥ १० 'वाह ऊठ्' इत्युक्ते ॥

क्षादूहिन्यामुपसंख्यानम्[1]) अक्षौहिणी सेना । (प्रादूहोढोढ्येषै-ष्येषु) प्रौहः, प्रौढः, प्रौढिः, प्रैषः, प्रैष्यः, (ऋते च तृतीयासमासे)। सुखेन ऋतः सुखार्तः। तृतीयेति किम्। परमर्तः[3]। (प्रवत्सतरकम्बलवसनार्णदशानामृणे[4]) प्रार्णम्, वत्सतरार्णमित्यादि ॥ **उपसर्गाः क्रियायोगे ।१।४।५९।** प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः। प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप । एते प्रादयः ॥ **भूवादयो धातवः ।१।३।१।** क्रियावाचिनो भ्वादयो[5] धातुसंज्ञाः स्युः ॥ **उपसर्गादृति धातौ ।६।१।९१।** अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । प्रार्च्छति ॥ **एङि पररूपम् ।६।१।९४।** आदुपसर्गादेङादौ[6] धातौ परे पररूपमेकादेशः स्यात्। प्रेजते। उपोषति ॥ **अचोऽन्त्यादि टि ।१।१।६४।** अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात्। (शकन्ध्वादिषु पररूपं वाच्यम्)। तच्च टेः। शकन्धुः, कर्कन्धुः, मनीषा। आकृतिगणोऽयम्। मार्तण्डः ॥ **ओमाङोश्च ।६।१।९५।** ओमि आङि चात्परे पररूपमेकादेशः स्यात्। शिवायोन्नमः, शिव एहि, शिवेहि ॥ **अकः सवर्णे दीर्घः ।६।१।१०१।** अकः सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यात्। दैत्यारिः, श्रीशः, विष्णूदयः, होतॄकारः ॥ **एङः**

---

१ अक्षाणामूहिनीति विग्रहे एतत्। अक्षाणामूहोऽस्या अस्तीति विग्रहे तु अक्षोहिणीत्येव। तथार्थवदूहिनीशब्दपरत्वाभावात् ॥ २ ऊहः ऊढः ऊढिः एषः एष्यश्च तेषु ॥ ३ परमश्चासावृतश्चेति विग्रहः ॥ ४ अत्र ऋणशब्दो ग्राह्यो न त्वर्णशब्दः ॥ ५ भू सत्तायामित्यादयः ॥ ६ अवर्णान्तात् ॥

**पदान्तादति** ।६।१।१०९। पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव, विष्णोऽव ॥ **सर्वत्र विभाषा गोः** ।६।१।१२२। लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः पदान्ते । गोअग्रम्, गोऽग्रम् । एङन्तस्य किम् । चित्रग्वग्रम् । पदान्ते किम् । गोः ॥ **अनेकाल्[2]शित्[3]सर्वस्य** ।१।१।५५। इति प्राप्ते ॥ **ङिच्च[4]** ।१।१।५३। ङिदनेकालप्यन्त्यस्यैव स्यात् ॥ **अवङ् स्फोटायनस्य** ।६।१।१२३। पदान्त एङन्तस्य गोरवङ् वाऽचि । गोऽग्रम्, गवाग्रम् । पदान्ते किम् । गवि ॥ **इन्द्रे च** ।६।१।१२४। गोरवङ् स्यादिन्द्रे । गवेन्द्रः ॥ **दूराद्धूते च** ।८।२।८४। दूरात्संबोधने वाक्यस्य टेः प्लुतो वा ॥ **प्लुत[5]प्रगृह्या[6] अचि नित्यम्** ।६।१।१२५। एतेऽचि प्रकृत्या[7] स्युः । आगच्छ कृष्ण ३ अत्र गौश्चरति ॥ **ईदूदेद्द्विवचनं प्रगृह्यम्** ।१।१।११। ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात् । हरी एतौ । विष्णू इमौ । गङ्गे अमू ॥ **अदसो मात्** ।१।१।१२। अस्मात्परावीदूतौ प्रगृह्यौ स्तः । अमी ईशाः, रामकृष्णावमू आसाते । मात्किम् । अमुकेऽत्र ॥ **चादयोऽसत्त्वे** ।१।४।५७। अद्रव्यार्थाश्चादयो निपाताः स्युः ॥ **प्रादयः** ।१।४।५८। एतेऽपि तथा ॥ **निपात एकाजनाङ्** ।१।१।१४। एकोऽज् निपात आङ्वर्जः प्रगृह्यः स्यात् । [10]इ इन्द्रः,

---

१ संहिताकालेऽप्यसन्धिरूपत्वेन स्थितिः ॥ २ अनेका अलः यस्य सोऽनेकाल् ॥ ३ शकारः इत्संज्ञको यस्य सः शित् ॥ ४ ङकारः इत्संज्ञको यस्य स ङित् ॥ ५ प्लुतसंज्ञकाः ॥ ६ प्रगृह्यसंज्ञकाः ॥ ७ संधिकार्यरहिता इति भावः ॥ ८ दूराद्धूते चेत्यनेन प्लुतसंज्ञा ॥ ९ असति मादग्रहणे एकारोऽप्यनुवर्तेत ॥ १० इ वितर्के ॥

उँ[1] उमेशः । वाक्यस्मरणयोरङित्[2] । आ एवं नु मन्यसे, आ एवं किल तत् । अन्यत्र ङित् । ईषदुष्णम् ओष्णम् ॥ **ओत्** ।१।१।१५। ओदन्तो निपातः प्रगृह्यः । अहो ईशाः ॥ **संबुद्धौ शाकल्यस्येतावनार्षे** ।१।१।१६। संबुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो इति, विष्ण इति, विष्णविति ॥ **मय[3] उञो वो वा** ।८।३।३३। मयः परस्य उञो वो वाऽचि । किम्वुक्तम्, किमुउक्तम् ॥ **इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च** ।६।१।१२७। पदान्ता इको ह्रस्वा वा स्युरसवर्णेऽचि । ह्रस्वविधिसामर्थ्यान्न स्वरसंधिः । चक्रि अत्र चक्र्यत्र । पदान्ता इति किम् ॥ **अचो रहाभ्यां द्वे** ।८।४।४६। अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । गौर्य्यौ । (न[4] समासे) वाप्यश्वः ॥ **ऋत्यकः** ।६।१।१२८। ऋति परे पदान्ता अकः प्राग्वद्वा । ब्रह्मऋषिः, ब्रह्मर्षिः । पदान्ताः किम् । आर्च्छत् ॥ इत्यच्संधिः ॥

## ॥ अथ हल्संधिप्रकरणम् ॥

**स्तोः श्चुना[5] श्चुः** ।८।४।४०। सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः । रामश्शेते, रामश्चिनोति, सच्चित्, शार्ङ्गिञ्जय ॥ **शात्** ।८।४।४४। शात्परस्य तवर्गस्य श्चुत्वं न स्यात् ।

---

१ उ विस्मये ॥ २ 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्' ॥ ३ मय् प्रत्याहारः ॥ ४ 'इकोऽसवर्णे' इत्यनेन विहितो ह्रस्वो नेत्यर्थः ॥ ५ अत्र स्थान्यादेशयोर्यथासंख्यं । निमित्तकार्यिणोस्तु न । तथात्वे तु शकारयोगे शकारः चवर्गयोगे चवर्ग इत्यर्थे जाते शादिति निषेधो व्यर्थः स्यादित्यर्थः ॥

विश्नः, प्रश्नः ॥ **ष्टुना ष्टुः** ।८।४।४१। स्तोः ष्टुना योगे ष्टुः स्यात्। रामष्षष्ठः, रामष्टीकते, पेष्टा, तट्टीका, चक्रिण्ढौकसे ॥ **न पदान्ताट्टोरनाम्** ।८।४।४२। पदान्तात्टवर्गात्परस्यानामः स्तोः ष्टुर्न स्यात्। षट्सन्तः, षट्ते । पदान्तात्किम्। ईट्टे। टोः किम्। सर्पिष्टमम् । (अनाम्नवतिनगरीणामिति वाच्यम्)। षण्णाम्, षण्णवतिः, षण्णगर्यः ॥ **तोः षि**[1] ।८।४।४३। न ष्टुत्वम्। सन्षष्ठः ॥ **झलां जशोऽन्ते** ।८।२।३९। पदान्ते झलां जशः स्युः। वागीशः ॥ **यरोऽनुनासिकेऽनुनासिको वा** ।८।४।४५। यरः[2] पदान्तस्या[3]नुनासिके परेऽनुनासिको वा स्यात्। एतन्मुरारिः, एतद्मुरारिः। (प्रत्यये भाषायां नित्यम्)। तन्मात्रम्, चिन्मयम् ॥ **तोर्लि** ।८।४।६०। तवर्गस्य लकारे परे परसवर्णः। तल्लयः, विद्वाँल्लिखति । नस्यानुनासिको लः ॥ **उदः स्थास्तम्भोः पूर्वस्य** ।८।४।६१। उदः परयोः स्थास्तम्भोः पूर्वसवर्णः ॥ **तस्मादित्युत्तरस्य** ।१।१।६७। पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम् ॥ **आदेः परस्य** ।१।१।५४। परस्य यद्विहितं तत्तस्यादेर्बोध्यम्। इति सस्य थः ॥ **झरो झरि सवर्णे** ।८।४।६५। हलः परस्य झरो[4] वा लोपः सवर्णे झरि ॥ **खरि च** ।८।४।५५। खरि झलां चरः स्युः। इत्युदो दस्य तः । उत्थानम्, उत्तम्भनम् ॥ **झयो होऽन्यतरस्याम्** ।८।४।६२। झयः परस्य हस्य वा पूर्वसवर्णः। नादस्य[5] घोषस्य संवारस्य महाप्राणस्य तादृशो[6] वर्गचतुर्थः[7]। वा-

---

१ तवर्गस्य षकारे परे ॥ २ यर् प्रत्याहारः ॥ ३ पदान्तस्येति किम्। विप्नः ॥ ४ झर् प्रत्याहारः ॥ ५ नादघोषसंवारमहाप्राणयत्नवतो हकारस्य ॥ ६ नादघोषादिप्रयत्नवान् ॥ ७ घकारः ॥

ग्घरिः ॥ **शश्छोऽटि ।८।४।६३।** झयः परस्य शस्य छो वाऽटि । तद् शिव इत्यत्र दस्य श्चुत्वेन जकारे कृते । खरि चेति जकारस्य चकारः । तच्शिवः, तच्छिवः । ( छत्वममीति वाच्यम् ) । तच्छ्लोकेन ॥ **मोऽनुस्वारः**[1] **।८।३।२३।** मान्तस्य पदस्यानुस्वारो हलि । हरिं वन्दे ॥ **नश्चापदान्तस्य झलि ।८।३।२४।** नस्य मस्य चापदान्तस्य झल्यनुस्वारः । यशांसि, आक्रंस्यते । झलि किम् । मन्यते ॥ **अनुस्वारस्य**[2] **ययि परसवर्णः ।८।४।५८।** स्पष्टम् । शान्तः ॥ **वा पदान्तस्य ।८।४।५९।** त्वङ्करोषि, त्वं करोषि ॥ **मो राजि समः क्वौ ।८।३।२५।** क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । सम्राट् ॥ **हे मपरे वा ।८।३।२६।** मपरे हकारे परे मस्य मो वा । किम्ह्मलयति, किंह्मलयति । ( यवलपरे यवला वा ) । कियँह्यः, किंह्यः, किवँह्वलयति, किंह्वलयति, किलँह्लादयति, किंह्लादयति ॥ **नपरे नः ।८।३।२७।** नपरे हकारे मस्य नो वा । किन्ह्नुते, किंह्नुते ॥ **डः सि धुट् ।८।३।२९।** डात्परस्य सस्य धुड्वा ॥ **आद्यन्तौ टकितौ ।१।१।४६।** टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः । षट्त्सन्तः, षट्सन्तः ॥ **ङ्णोः**[3] **कुक् टुक् शरि ।८।३।२८।** वा स्तः । प्राङ्षष्ठः, प्राङ्क्षष्ठः । ( चयो[4] द्वितीयाः[5] शरि पौष्करसादे[6]रिति वाच्यम् ) प्राङ्ख्षष्ठः,

---

१ 'उञि च पदे' इत्यतः पदे इति 'हलि सर्वेषाम्' इत्यतो हलीति चानुवर्तते ॥ २ पदान्तस्यानुस्वारस्य ययि परे परसवर्णो वा स्यात् ॥ ३ ङकारणकारयोः कुक्टुकावागमौ स्तः ॥ ४ चय् प्रत्याहारः ॥ ५ ख फ छ ठ था इत्यर्थः ॥ ६ पौष्करसादिराचार्यः ॥

सुगण्षष्ठः, सुगण्ट्षष्ठः, सुगण्ठ्षष्ठः ॥ **नश्च ।८।३।३०।** नान्तात्परस्य सस्य धुड्वा । सन्त्सः, सन्सः ॥ **शि तुक् ।८।३।३१।** पदान्तस्य नस्य शे परे तुग्वा । सञ्छंभुः[1], सञ्च्छंभुः, सञ्च्शंभुः, सञ्शंभुः ॥ **ङमो ह्रस्वादचि ङमुण्नित्यम् ।८।३।३२।** ह्रस्वात्परो यो ङम्[2] तदन्तं यत्पदं तस्मात्परस्याचो ङमुट् । प्रत्यङ्ङात्मा, सुगण्णीशः, सन्नच्युतः ॥ **समः सुटि ।८।३।५।** समो रुः सुटि ॥ **अत्रानुनासिकः पूर्वस्य तु वा ।८।३।२।** अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा ॥ **अनुनासिकात्परोऽनुस्वारः ।८।३।४।** अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः ॥ **खरवसानयोर्विसर्जनीयः ।८।३।१५।** खरि अवसाने च पदान्तस्य रेफस्य विसर्गः । (संपुंकानां सो वक्तव्यः) । सँस्स्कर्ता, संस्स्कर्ता ॥ **पुमः खय्यम्परे ।८।३।६।** अम्परे[3] खयि पुमो रुः । पुँस्कोकिलः ॥ पुंस्कोकिलः ॥ **नश्छव्यप्रशान् ।८।३।७।** अम्परे छवि[4] नान्तस्य पदस्य रुः ॥ **विसर्जनीयस्य सः ।८।३।३४।** खरि । चक्रिँस्त्रायस्व, चक्रिंस्त्रायस्व । अप्रशान् किम् । प्रशान्तनोति । पदान्तस्येति किम् । हन्ति ॥ **नॄन्पे ।८।३।१०।** नॄनित्यस्य रुर्वा पे ॥ **कुप्वोः ᳵकᳶपौ च ।८।३।३७।** कवर्गे पवर्गे च विसर्गस्य ᳵकᳶपौ स्तः । चाद्विसर्गः । नॄँᳶपाहि, नॄंᳶपाहि, नॄँःपाहि, नॄंःपाहि, नॄन्पाहि ॥ **तस्य परमाम्रेडितम् ।८।१।२।** द्विरुक्तस्य परम्[5] आम्रेडितं[6] स्यात् ॥ **काना-**

---

१ 'ञ्छौ ञ्चछा ञ्चशा ञशाविति चतुष्टयम् । रूपाणामिह तुक्छत्वचलोपानां विकल्पनात्' ॥ २ ङम् प्रत्याहारः ॥ ३ अम्प्रत्याहारान्तर्गतवर्णः परो यस्य तस्मिन् खय्प्रत्याहारान्तर्गतवर्णे ॥ ४ छव् प्रत्याहारः ॥ ५ द्वितीयं रूपम् ॥ ६ आम्रेडितसंज्ञकमित्यर्थः ॥

**म्रेडिते** ।८।३।१२। कान्नकारस्य[1] रुः स्यादाम्रेडिते । काँस्कान्, कांस्कान् ॥ **छे च** ।६।१।७३। ह्रस्वस्य[2] छे तुगागमः । शिवच्छाया ॥ **पदान्ताद्वा** ।६।१।७६। दीर्घात्पदान्ताच्छे तुग्वा । लक्ष्मीच्छाया, लक्ष्मीछाया ॥ इति हल्संधिप्रकरणम् ॥

## ॥ अथ विसर्गसंधिप्रकरणम् ॥

**विसर्जनीयस्य सः** ।८।३।३४। खरि । विष्णुस्त्राता ॥ **वा शरि** ।८।३।३६। शरि विसर्गस्य विसर्गो वा । हरिः शेते, हरिश्शेते ॥ **ससजुषो रुः** ।८।२।६६। पदान्तस्य सस्य सजुषश्च[3] रुः स्यात् ॥ **अतो रोरप्लुतादप्लुते** ।६।१।११३। अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । शिवोऽर्च्यः ॥ **हशि च** ।६।१।११४। तथा[4] । शिवो वन्द्यः ॥ **भोभगोअघोअपूर्वस्य योऽशि** ।८।३।१७। एतत्पूर्वस्य[5] रोर्यादेशोऽशि । देवा इह, देवायिह । भोस् भगोस् अघोस् इति सान्ता निपाताः । तेषां रोर्यत्वे कृते ॥ **हलि सर्वेषाम्** ।८।३।२२। भो भगो अघो अपूर्वस्य यस्य[6] लोपः स्याद्धलि । भो देवाः । भगो नमस्ते । अघो याहि ॥ **रोऽसुपि** ।८।३।६९। अह्नो रेफादेशो न तु सुपि । अहरहः, अहर्गणः ॥ **रो रि** ।८।३।१४। रेफस्य रेफे परे लोपः ॥ **ढ्रलोपे पूर्वस्य दीर्घोऽणः** ।६।३।१११। ढरेफयोर्लोपनिमित्तयोः[7] पूर्वस्याणो दीर्घः । पुना रमते, हरी रम्यः, शंभू राजते । अणः

---

१ कान्शब्दस्य नकारस्य ॥ २ 'ह्रस्वस्य पिति कृति तुगि'त्यस्माद्ध्रस्वस्य तुक् चेत्यनुवर्त्याह–ह्रस्वस्येति, तुगागम इति च ॥ ३ सजुष्शब्दस्येत्यर्थः ॥ ४ अप्लुतादतः परस्य रोरुः स्याद्धशि ॥ ५ भोभगोअघोअपूर्वस्य ॥ ६ यकारस्य ॥ ७ परतः स्थितयोरित्यर्थः ॥

किम् । तृढः, वृढः । मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रोरीति लोपे च प्राप्ते ॥ **विप्रतिषेधे परं कार्यम्** ।१।४।२। तुल्यबलविरोधे परं कार्यं स्यात् । इति लोपे प्राप्ते । पूर्वत्रासिद्धमिति रोरीत्यस्यासिद्धत्वादुत्वमेव । मनोरथः ॥ **एतत्तदोः सुलोपोऽकोरनञ्समासे हलि** ।६।१।१३२। अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि न तु नञ्समासे । एष विष्णुः, स शंभुः । अकोः किम् । एषको रुद्रः । अनञ्समासे किम् । असशिवः । हलि किम् । एषोऽत्र ॥ **सोऽचि लोपे चेत्पादपूरणम्** ।६।१।१३४। स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत । सेमामविड्ढि प्रभृतिम्, सैष दाशरथी रामः ॥ इति विसर्गसन्धिप्रकरणम् ॥

## ॥ अथ अजन्तपुंलिङ्गप्रकरणम् ॥

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम्** ।१।२।४५। धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वाऽर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् ॥ **कृत्तद्धितसमासाश्च** ।१।१।४६। कृत्तद्धितान्तौ समासाश्च तथा स्युः ॥ **स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्** ।४।१।२। सु औ जस् इति प्रथमा । अम् औट् शस् इति द्वितीया । टा भ्यां

---

१ अर्थवदिति किम् । धनं वनमित्यादौ प्रतिवर्णं संज्ञा माभूत् । अधातुरिति किम् । अहन्नित्यत्र नलोपो माभूत् ॥ २ प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणात् ॥ ३ प्रातिपदिकसंज्ञाः ॥ ४ प्रथमाया एकवचनद्विवचनबहुवचनद्योतकाः प्रत्यया इत्यर्थः । एवं द्वितीया इत्यादावपि बोध्यम् ॥

भिस् इति तृतीया । ङे भ्याम् भ्यस् इति चतुर्थी । ङसि भ्याम् भ्यस् इति पञ्चमी । ङस् ओस् आम् इति षष्ठी । ङि ओस् सुप् इति सप्तमी ॥ **ङ्याप्प्रातिपदिकात्** ।४।१।१। **प्रत्ययः** ।३।१।१। **परश्च** ।३।१।२। इत्यधिकृत्य । ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः ॥ **सुपः** ।१।४।१०३। सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः ॥ **द्व्येकयोर्द्विवचनैकवचने** ।१।४।२२। द्वित्वैकत्वयोरेते[1] स्तः ॥ **बहुषु बहुवचनम्** ।१।४।२१। बहुत्वविवक्षायां बहुवचनं स्यात् ॥ **विरामोऽवसानम्** ।१।४।१०२। वर्णानामभावोऽवसानसंज्ञः स्यात् । रुत्वविसर्गौ । रामः ॥ **सरूपाणामेकशेष एकविभक्तौ** ।१।२।६४। एकविभक्तौ यानि सरूपाण्येव[2] दृष्टानि तेषामेक एव शिष्यते ॥ **प्रथमयोः पूर्वसवर्णः** ।६।१।१०२। अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात् । इति प्राप्ते ॥ **नादिचि** ।६।१।१०४। आदिचि[3][4] न पूर्वसवर्णदीर्घः । वृद्धिरेचि । रामौ ॥ **बहुषु बहुवचनम्**[5] ।१।४।२१। **चुटू** ।१।३।७। प्रत्ययाद्यौ चुटू[6] इतौ स्तः ॥ **विभक्तिश्च** ।१।४।१०४। सुप्तिङौ विभक्तिसंज्ञौ स्तः ॥ **न विभक्तौ तुस्माः** ।१।३।४। विभक्तिस्थास्तवर्गसमा[7] नेतः[8] । इति सस्य नेत्त्वम् । रामः, रामौ, रामाः ॥ **एकवचनं संबुद्धिः** ।२।३।४९। सं-

---

१ द्वित्वे एकत्वे च विवक्षित इत्यर्थः ॥ २ वृद्धो यूनेत्यत एवेत्यपकृष्याह सरूपाण्येवेति । तेन जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोर्नैकशेषः ॥ ३ अवर्णात् ॥ ४ इच् प्रत्याहारः ॥ ५ बहुत्वविवक्षायाम् ॥ ६ चवर्गटवर्गौ ॥ ७ सकारो मकारश्च ॥ ८ इत्संज्ञका न भवन्ति ॥

बोधने प्रथमाया एकवचनं संबुद्धिसंज्ञं स्यात् ॥ **यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ।१।४।१३।** यः प्रत्ययो यस्मात्क्रियते तदादि[1] शब्दस्वरूपं तस्मिन्[2]नङ्गं[3] स्यात् ॥ **एङ्ह्रस्वात्संबुद्धेः ।६।१।६९।** एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते संबुद्धेश्चेत् । हे राम, हे रामौ, हे रामाः ॥ **अमि पूर्वः ।६।१।१०७।** अकोऽम्य[4]चि पूर्वरूपमेकादेशः । रामम्, रामौ ॥ **लशक्वतद्धिते ।१।३।८।** तद्धितवर्ज्यप्रत्ययाद्या लशकवर्गा[5] इतः स्युः ॥ **तस्माच्छसो नः पुंसि ।६।१।१०३।** पूर्वसवर्णदीर्घात्परो यः शस्[6]तस्य नः स्यात्पुंसि ॥ **अट्कुप्वाङ्नुम्व्यवायेऽपि ।८।४।२।** अट्[7] कवर्ग पवर्ग आङ् नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः समानपदे[8] । इति प्राप्ते ॥ **पदान्तस्य ।८।४।३७।** नस्य णो न । रामान् ॥ **टाङसिङसामिनात्स्याः ।७।१।१२।** अदन्ताट्टादीनामिनादयः स्युः । णत्वम्, रामेण ॥ **सुपि च ।७।३।१०२।** यञादौ सुपि अतोऽङ्गस्य दीर्घः । रामाभ्याम् ॥ **अतो भिस ऐस् ।७।१।९।** अनेकाल् शित्सर्वस्य । रामैः ॥ **ङेर्यः ।७।१।१३।** अतोऽङ्गात्परस्य ङेर्यादेशः ॥ **स्थानिवदादेशोऽनल्विधौ ।१।१।५६।** आदेशः स्थानिवत्स्यान्न

१ 'भवामि भविष्यामि' इत्यादौ शबादिविकरणविशिष्टस्याङ्गसंज्ञार्थं तदादिग्रहणम् ॥ २ तस्मिन्प्रत्यये परे ॥ ३ अङ्गसंज्ञम् ॥ ४ द्वितीयैकवचनप्रत्ययो योऽम् तत्संबन्धिनीत्यर्थः ॥ ५ लकारः शकारः कवर्गश्च ॥ ६ शस्प्रत्ययावयवो यः सकारस्तस्य नकारः ॥ ७ अट् प्रत्याहारः ॥ ८ 'रषाभ्यां नो णः समानपदे' इत्यनुवर्तते ॥ ९ इदं चतुर्थ्येकवचनं न सप्तम्याः । व्याख्यानात् । ङेरामित्यत्र तु सप्तम्या एव । 'स्त्रियां' इत्यादिनिर्देशात् ॥

तु स्थान्यलाश्रयविधौ[1] । इति स्थानिवत्त्वात्सुपि चेति दीर्घः । रामाय[2] रामाभ्याम् ॥ **बहुवचने झल्येत्** ।७।३।१०३। झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः[3] । रामेभ्यः । सुपि किम् । पचध्वम् ॥ **वावसाने** ।८।४।५६। अवसाने झलां चरो वा । रामात् रामाद् रामाभ्यां रामेभ्यः । रामस्य ॥ **ओसि च** ।७।३।१०४ अतोऽङ्गस्यैकारः । रामयोः ॥ **ह्रस्वनद्यापो नुट्** ।७।१।५४। ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः ॥ **नामि** ।६।४।३। अजन्ताङ्गस्य दीर्घः । रामाणाम् । रामे रामयोः । एत्वे कृते ॥ **आदेशप्रत्यययोः** ।८।३।५९। इण्कुभ्यां[4] परस्यापदान्तस्यादेशः प्रत्ययावयवश्च सस्तस्य मूर्धन्यादेशः । ईषद्विवृतस्य सस्य तादृश एव षः । रामेषु । एवं कृष्णादयोऽप्यदन्ताः ॥ **सर्वादीनि[5] सर्वनामानि[6]** ।१।१।२७। सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् ॥ **जसः शी** ।७।१।१७। अदन्तात्सर्वनाम्नो जसः शी स्यात् । अनेकाल्त्वा-

---

१ स्थानिभूतो यः अल् तदाश्रयविधौ (तत्र च अलि परतः विधिः अल्विधिः । अलः स्थाने विधिः अल्विधिः । अलः परस्य विधिः अल्विधिः । अला विधिः अल्विधिरित्यल्विधेरनेकप्रकारत्वं ज्ञातव्यम्) ॥ २ रामायेत्यादौ 'सुपि च' इति दीर्घे कर्तव्ये सन्निपातपरिभाषा न प्रवर्तते 'कष्टाय क्रमणे' इत्यादिनिर्देशेन तस्या अनित्यत्वज्ञापनात् ॥ ३ सुपि परे ॥ ४ इण्कवर्गाभ्यां परस्य ॥ ५ सर्व आदिर्येषां तानीति तद्गुणसंविज्ञानो बहुव्रीहिः । 'अदः सर्वेषाम्' इति लिङ्गात् ॥ ६ सर्वनामसंज्ञानि स्युः ॥

त्सर्वादेशः । सर्वे ॥ **सर्वनाम्नः स्मै** ।७।१।१४। अतः सर्वनाम्नो ङेः स्मै । सर्वस्मै ॥ **ङसिङ्योः स्मात्स्मिनौ** ।७।१।१५। अतः सर्वनाम्न एतयोरेतौ स्तः । सर्वस्मात् ॥ **आमि सर्वनाम्नः सुट्** ।७।१।५२। अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः । एत्वषत्वे । सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् । एवं विश्वाद-योऽप्यदन्ताः । उभशब्दो द्विवचनान्तः । उभौ २ उभाभ्याम् ३ उभयोः २ । तस्येह पाठोऽकजर्थः[1] । डतरडतमौ[2] प्रत्ययौ । प्रत्यय-ग्रहणे तदन्तग्रहणमिति तदन्ता ग्राह्याः । नेम इत्यर्धे । समः सर्व-पर्यायः । तुल्यपर्यायस्तु न । यथासंख्यमनुदेशः समानामिति ज्ञापकात् ॥ **पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्था-यामसंज्ञायाम्** ।१।१।३४। एतेषां व्यवस्थायामसंज्ञायां सर्व-नामसंज्ञा गणसूत्रात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे पूर्वाः । असंज्ञायां किम् । उत्तराः कुरवः । स्वाभिधेयापेक्षावधि-नियमो[3] व्यवस्था । व्यवस्थायां किम् । दक्षिणा गाथकाः । कुशला इत्यर्थः ॥ **स्वमज्ञातिधनाख्यायाम्** ।१।१।३५। ज्ञातिध-नान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा सा जसि वा । स्वे स्वाः । आत्मीयाः आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः । ज्ञात-योऽर्था वा ॥ **अन्तरं बहिर्योगोपसंव्यानयोः** ।१।१।३६। बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा सा जसि वा । अन्तरे अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे अन्तरा वा

---

१ 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इत्युक्तः ॥ २ 'किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' 'वा बहूनां जातिपरिप्रश्ने डतमच्' इत्युक्तौ ॥ ३ अवधे-र्नियमोऽवधिनियमः । स्वाभिधेयापेक्षश्चासाववधिनियमश्चेति विग्रहः ॥

शाटकाः । परिधानीया इत्यर्थः ॥ **पूर्वादिभ्यो नवभ्यो वा** ।७।१।१६। एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात् पूर्वात्, पूर्वस्मिन् पूर्वे । एवं परादीनाम् । शेषं सर्ववत् ॥ **प्रथमचरमतयाल्पार्धकतिपयनेमाश्च** ।१।१।३३। एते जसि उक्तसंज्ञा वा स्युः । प्रथमे प्रथमाः । तयः[1] प्रत्ययः । द्वितये द्वितयाः । शेषं रामवत् । नेमे नेमाः । शेषं सर्ववत् । (तीयस्य[2] ङित्सु वा) द्वितीयस्मै द्वितीयायेत्यादि । एवं तृतीयः । निर्जरः ॥ **जराया[3] जरसन्यतरस्याम्** ।७।२।१०१। अजादौ विभक्तौ । पदाङ्गाधिकारे तस्य च तदन्तस्य च । निर्दिश्यमानस्यादेशा[4] भवन्ति । एकदेशविकृतमनन्यवदिति जरशब्दस्य जरस् । निर्जरसौ निर्जरस इत्यादि । पक्षे हलादौ च रामवत् । विश्वपाः ॥ **दीर्घाज्जसि[5] च** ।६।१।१०५। विश्वपौ विश्वपाः ॥ विश्वपाम् विश्वपौ ॥ **सुडनपुंसकस्य[6]** ।१।१।४३। स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ॥ **स्वादिष्वसर्वनामस्थाने** ।१।४।१७। कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं पदं स्यात् ॥ **यचि भम्** ।१।४।१८। यादिष्वजादिषु[7] च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्यात् ॥ **आ कडारादेका संज्ञा** ।१।४।१। इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया या पराऽनवकाशा च ॥ **आतो धातोः** ।६।४।१४०।

---

१ 'संख्याया अवयवे तयप्' इति विहितः । ततस्तदन्ता आद्याः ॥ २ 'द्वेस्तीयः' इत्युक्तः ॥ ३ जराशब्दस्य जरस् वा स्यात् ॥ ४ षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयत्वं निर्दिश्यमानत्वम् ॥ ५ दीर्घाज्जसि इचि च परे न पूर्वसवर्णदीर्घः ॥ ६ सुट् प्रत्याहारः ॥ ७ यकारादिषु ॥

आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः । अलोऽन्त्यस्य । विश्वपः । विश्वपा विश्वपाभ्यामित्यादि ॥ एवं शङ्खध्मादयः । धातोः किम् । हाहान् । हरिः हरी ॥ **जसि च** ।७।३।१०९। ह्रस्वान्तस्याङ्गस्य गुणः । हरयः ॥ **ह्रस्वस्य गुणः** ।७।३।१०८। संबुद्धौ । हे हरे[1] । हरिम् हरी हरीन् ॥ **शेषो घ्यसखि** ।१।४।७। अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञम् ॥ **आङो नाऽस्त्रियाम्** ।७।३।१२०। घेः परस्याङो ना स्यादस्त्रियाम् । आङिति टासंज्ञा । हरिणा हरिभ्याम् हरिभिः ॥ **घेर्ङिति** ।७।३।१११। घिसंज्ञस्य ङिति सुपि गुणः । हरये ॥ **ङसिङसोश्च** ।६।१।११०। एङो ङसिङसोरति पूर्वरूपमेकादेशः । हरेः २ हर्योः हरीणाम् ॥ **अच्च घेः** ।७।३।११९। इदुद्भ्यामुत्तरस्य ङेरौत् । घेरत्[2] । हरौ हरिषु । एवं कव्यादयः ॥ **अनङ् सौ** ।७।१।९३। सख्युरङ्गस्यानङादेशोऽसंबुद्धौ सौ ॥ **अलोऽन्त्यात्पूर्व उपधा** ।१।१।६५। अन्त्यादलः[3] पूर्वो वर्ण उपधासंज्ञः ॥ **सर्वनामस्थाने चासंबुद्धौ** ।६।४।८। नान्तस्योपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने ॥ **अपृक्त एकाल् प्रत्ययः** ।१।२।४१। एकाल्प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् ॥ **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्** ।६।१।६८। हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं[4] हल्-

---

१ 'एङ्ह्रस्वात्-' इति संबुद्धिलोपः ॥ २ घिसंज्ञस्य अकारादेशः ॥ ३ अल् प्रत्याहारः ॥ ४ 'सु ति सि' एतत्प्रत्ययसंबन्ध्येकवर्णप्रत्ययरूपम् । सुतिसीति किम् । अभैत्सीत् । अस्मिन् सूत्रे साहचर्यपरिभाषया तिपा सह चरितस्य सिप एव ग्रहणं न सिचः ॥

प्यते ॥ **नलोपः प्रातिपदिकान्तस्य** ।८।२।७। प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः । सखा ॥ **सख्युरसंबुद्धौ** ।७।१।९२। सख्युरङ्गात्परं संबुद्धिवर्जं सर्वनामस्थानं णिद्वत्[1]स्यात् ॥ **अचो ञ्णिति** ।७।२।११५। अजन्ताङ्गस्य वृद्धिर्ञिति णिति च परे । सखायौ सखायः । हे सखे । सखायम् सखायौ सखीन् । सख्या सख्ये ॥ **ख्यत्यात्परस्य** ।६।१।११२। खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उः[2] । सख्युः ॥ **औत्** ।७।३।११८। ईतः[3] परस्य ङेरौत् । सख्यौ । शेषं हरिवत् ॥ **पतिः समास[4] एव** ।१।४।८। घिसंज्ञः । पत्ये । पत्युः २ । पत्यौ । शेषं हरिवत् । समासे तु भूपतये । कतिशब्दो बहुवचनान्तः ॥ **बहुगण[5]वतुडतिसंख्या** ।१।१।२३। **डति च** ।१।१।२५। डत्यन्ता संख्या षट्[6]संज्ञा स्यात् ॥ **षड्भ्यो लुक्** ।७।१।२२। जश्शसोः[7] ॥ **प्रत्ययस्य लुक्श्लुलुपः** ।१।१।६१। लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् ॥ **प्रत्ययलोपे प्रत्ययलक्षणम्** ।१।१।६२। प्रत्यये लुप्ते[8]ऽपि तदाश्रितं कार्यं स्यात् । इति जसि चेति गुणे प्राप्ते ॥ **न लुमताङ्गस्य** ।१।१।६३। लुमता[9] शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् । कति २ कतिभिः कतिभ्यः २ कतीनाम् कतिषु । अस्मत्-युष्मत्-षट्संज्ञका-

---

१ 'गोतो णित्' इत्यतो णिदित्यनुवर्तते ॥ २ उकारः स्यात् ॥ ३ इदुद्भ्यामुत्तरस्य ॥ ४ 'शेषो घ्यसखि' इति सूत्रात् घीत्यनुवर्तते । पतिशब्दस्य समास एव घिसंज्ञेत्यर्थः ॥ ५ एते संख्यासंज्ञाः स्युः ॥ ६ 'ष्णान्ता षट्' इत्यतः षडित्यनुवर्तते ॥ ७ षड्भ्यः परयोर्जश्शसोर्लुक् स्यात् ॥ ८ अदर्शनं गते सत्यपि ॥ ९ 'लुक् श्लु लुप्' एते लुमन्तः ॥

स्त्रिषु सरूपाः[1]। त्रिशब्दो नित्यं बहुवचनान्तः। त्रयः। त्रीन्। त्रिभिः। त्रिभ्यः २ ॥ **त्रेस्त्रयः** ।७।१।५३। त्रिशब्दस्य त्रयादेशः स्यादामि। त्रयाणाम्। त्रिषु। गौणत्वेऽपि प्रियत्रयाणाम् ॥ **त्यदादीनामः** ।७।२।१०२। एषामकारो[2] विभक्तौ। द्विपर्यन्तानामेवेष्टिः। द्वौ। द्वौ। द्वाभ्याम्। द्वाभ्याम्। द्वयोः। द्वयोः। पाति लोकमिति पपीः सूर्यः ॥ **दीर्घाज्जसि च** ।६।१।१०५। दीर्घाज्जसि इचि च परे न पूर्वसवर्णः। पप्यौ पप्यः। हे पपीः। पपीम् पपीन्। पप्या पपीभ्याम् पपीभिः। पप्ये पपीभ्यः। पप्यः पप्योः। दीर्घत्वान्न नुट्। पप्याम्। ङौ तु सवर्णदीर्घः। पपी पप्योः पपीषु। एवं वातप्रम्यादयः। बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी ॥ **यू[3] स्त्र्याख्यौ नदी** ।१।४।३। ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः। प्रथमलिङ्गग्रहणं च। पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि[4] नदीत्वं वक्तव्यमित्यर्थः ॥ **अम्बार्थनद्योर्ह्रस्वः** ।७।३।१०७। संम्बुद्धौ[5]। हे बहुश्रेयसि ॥ **आण्नद्याः** ।७।३।११२। नद्यन्तात्परेषां ङितामाडागमः ॥ **आटश्च** ।६।१।९०। आटोऽचि परे वृद्धिरेकादेशः ॥ बहुश्रेयस्यै बहुश्रेयस्याः बहुश्रेयसीनाम् ॥ **ङेराम्नद्याम्नीभ्यः** ।७।३।११६। नद्यन्तादाबन्तान्नीशब्दात्परस्य ङेराम्[6]। बहुश्रेयस्याम्। शेषं पपीवत्। अङ्यन्तत्वान्न सुलोपः। अतिलक्ष्मीः। शेषं बहुश्रेयसीवत्। प्रधीः ॥ **अचि श्नुधातुभ्रुवां**

---

१ पुंलिङ्गस्त्रीलिङ्गनपुंसकलिङ्गेषु समानरूपाः ॥ २ अकारोऽन्तादेशः स्यात् ॥ ३ ई च ऊ च यू इति विग्रहः ॥ ४ गौणत्वेऽपि ॥ ५ 'संबुद्धौ च' इत्यतः संबुद्धाविल्यनुवर्तते ॥ अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात्संबुद्धौ ॥ ६ आम् आदेशः स्यात् ॥

**य्वोरियङुवङौ** ।६।४।७७। श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे। इति प्राप्ते॥ **एरनेकाचोऽसंयोगपूर्वस्य** ।६।४।८२। धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण्स्यादजादौ प्रत्यये। प्रध्यौ। प्रध्यः। प्रध्यम् प्रध्यौ प्रध्यः। प्रध्यि। शेषं पपीवत्। एवं ग्रामणीः। ङौ तु ग्रामण्याम्। अनेकाचः किम्। नीः नियौ नियः। अमि शसि च परत्वादियङ्। नियम्। ङेराम्। नियाम्। असंयोगपूर्वस्य किम्। सुश्रियौ। यवक्रियौ॥ **गतिश्च** ।१।४।६०। प्रादयः क्रियायोगे गतिसंज्ञाः[1] स्युः। गतिकारकेतरपूर्वपदस्य यण् नेष्यते। शुद्धधियौ॥ **न भूसुधियोः** ।६।४।८५। एतयोरचि सुपि यण्न। सुधियौ सुधिय इत्यादि। सुखमिच्छतीति सुखीः सुतीः[2]। सुख्यौ सुत्यौ। सुख्युः सुत्युः। शेषं प्रधीवत्। शंभुर्हरिवत्। एवं भान्वादयः॥ **तृज्वत्क्रोष्टुः** ।७।१।९५। असंबुद्धौ[3] सर्वनामस्थाने परे। क्रोष्टुशब्दस्य[4] क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः॥ **ऋतो ङिसर्वनामस्थानयोः** ।७।३।११०। ऋतोऽङ्गस्य गुणो ङौ सर्वनामस्थाने च। इति प्राप्ते॥ **ऋदुशनस्पुरुदंसोऽनेहसां च** ।७।१।९४। ऋदन्तानामुशनसादीनां चानङ्[5]स्यादसंबुद्धौ॥ **अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम्** ।६।४।११। अबादीनामुपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने। क्रोष्टा क्रोष्टारौ

---

१ उपसर्गसंज्ञा गतिसंज्ञाश्चेत्यर्थः॥ २ सुतमिच्छतीति सुतीः॥ ३ 'सर्वनामस्थाने चासंबुद्धौ' इत्यनुवर्तते॥ ४ स्थाने इत्यर्थः॥ ५ 'अनङ् सौ' इत्यनुवर्तते॥

क्रोष्टारः । क्रोष्टून् ॥ **विभाषा तृतीयादिष्वचि** ।७।१।९७। अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा क्रोष्ट्रे ॥ **ऋत उत्** ।६।१।१११। ऋतो ङसिङसोरति उँदेकादेशो रपरः ॥ **रात्सस्य** ।८।२।२४। रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य । रस्य विसर्गः । क्रोष्टुः क्रोष्ट्रोः । (नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन) क्रोष्टूनाम् । क्रोष्टरि । पक्षे हलादौ च शंभुवत् । हूहूः हूह्वौ हूह्वः । हूहूम् इत्यादि । अतिचमूशब्दे तु नदीकार्यं विशेषः । हे अतिचमु । अतिचम्वै । अतिचम्वाः अतिचमूनाम् । खलपूः ॥ **ओः सुपि** ।६।४।८३। धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादचि सुपि । खलप्वौ खलप्वः । एवं सुल्वादयः । स्वभूः स्वभुवौ स्वभुवः । वर्षाभूः ॥ **वर्षाभ्वश्च** ।६।४।८४। अस्य यण् स्यादचि सुपि । वर्षाभ्वावित्यादि । दृन्भूः (दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः)। दृन्भ्वौ । एवं करभूः । धाता । हे धातः धातारौ धातारः । (ऋवर्णान्नस्य णत्वं वाच्यम्) । धातॄणाम् । एवं नप्त्रादयः । नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम् । तेनेह न । पिता पितरौ पितरः । पितरम् । शेषं धातृवत् । एवं जामात्रादयः । ना नरौ ॥ **नृ च** ।६।४।६। अस्य नामि वा दीर्घः । नृणाम् नॄणाम् ॥ **गोतो णित्** ।७।१।९०। ओकाराद्विहितं सर्वनामस्थानं णिँद्वत् । गौः गावौ

---

१ उकारः ॥ २ उणादिनिष्पन्नानां तृन्तृजन्तानां चेद्भवति तर्हि नप्त्रादीनामेवेति । तेन पितृभ्रातृप्रभृतीनां न । उद्गातृशब्दस्य तु भवत्येव । समर्थसूत्रे उद्गातार इति भाष्यप्रयोगात् ॥ ३ तेन 'अचो ञ्णिति' इत्यनेनाङ्गस्य वृद्धिर्भवति ॥

गावः ॥ **औतोऽम्शसोः** ।६।१।९३। ओकारादम्शसोरचि आकार एकादेशः । गाम् गावौ गाः । गवा । गवे । गोः । इत्यादि ॥ **रायो हलि** ।७।२।८५। अस्याकारादेशो हलि विभक्तौ । राः रायौ रायः । राभ्यामित्यादि । ग्लौः ग्लावौ ग्लावः । ग्लौभ्यामित्यादि ॥ इत्यजन्ताः पुंलिङ्गाः ॥

## ॥ अथाजन्तस्त्रीलिङ्गप्रकरणम् ॥

रमा ॥ **औङ आपः** ।७।१।१८। आबन्तादङ्गात्परस्यौङः शी स्यात् । औङित्यौकारविभक्तेः संज्ञा । रमे रमाः ॥ **संबुद्धौ च** ।७।३।१०६। आप एकारः स्यात्संबुद्धौ । एङ्ह्रस्वादिति संबुद्धिलोपः । हे रमे हे रमे हे रमाः । रमाम् रमे रमाः ॥ **आङि चापः** ।७।३।१०५। आङि ओसि चाप एकारः । रमया रमाभ्याम् रमाभिः ॥ **याडापः** ।७।३।११३। आपो ङितो याट् । वृद्धिः । रमायै रमाभ्याम् रमाभ्यः । रमायाः रमयोः रमाणाम् । रमायाम् रमासु । एवं दुर्गाम्बिकादयः ॥ **सर्वनाम्नः स्याड्ढ्रस्वश्च** ।७।३।११४। आबन्तात्सर्वनाम्नो ङितः स्याट् स्यादापश्च ह्रस्वः । सर्वस्यै । सर्वस्याः सर्वासाम् । सर्वस्याम् । शेषं रमावत् । एवं विश्वादय आबन्ताः ॥ **विभाषा दिक्समासे बहुव्रीहौ** ।१।१।२८। सर्वनामता वा । उत्तरपूर्वस्यै । उत्तरपूर्वायै । (तीयस्य वा संज्ञा) द्वितीयस्यै द्वितीयायै । एवं तृतीया । अम्बार्थेति

---

१ आ ओत इति पदच्छेदः ॥ २ रैशब्दस्य ॥ ३ आबन्ताङ्गस्य ॥ ४ 'ङेङसिङस्ङि' एषामित्यर्थः ॥ ५ (विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम्) इति वार्तिकात् ॥

ह्रस्वः । हे अम्ब । हे अक्क[1] । हे अल्ल । जरा जरसौ जरे इत्यादि । पक्षे रमावत् । गोपा विश्वपावत् । मतीः । मत्या ॥ **ङिति ह्रस्वश्च** ।१।४।६। इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति । मत्यै मतये । मत्याः २ मतेः ॥ **इदुद्भ्याम्** ।७।३।११७। नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् । मत्याम् मतौ । शेषं हरिवत् । एवं बुद्ध्यादयः ॥ **त्रिचतुरोः स्त्रियां तिसृ चतसृ** ।७।२।९९। स्त्रीलिङ्गयोरेतौ स्तो विभक्तौ[1] ॥ **अचि र ऋतः** ।७।२।१००। तिसृ चतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि । गुणदीर्घोत्वानामपवादः । तिस्रः तिस्रः तिसृभिः तिसृभ्यः तिसृभ्यः । आमि नुट् ॥ **न तिसृचतसृ**[2] ।६।४।४। एतयोर्नामि दीर्घो न । तिसृणाम् । तिसृषु । द्वे द्वे द्वाभ्याम् द्वाभ्याम् द्वाभ्याम् द्वयोः द्वयोः । गौरी गौर्यौ गौर्यः । हे गौरि । गौर्यै इत्यादि । एवं नद्यादयः । लक्ष्मीः । शेषं गौरीवत् । एवं तरीतन्त्र्यादयः । स्त्री । हे स्त्रि ॥ **स्त्रियाः** ।६।४।७९। अस्येयङ् स्यादजादौ प्रत्यये परे । स्त्रियौ स्त्रियः ॥ **वाम्शसोः** ।६।४।८०। अमि शसि च स्त्रिया इयङ् वा स्यात् । स्त्रियम्, स्त्रीम् स्त्रियः स्त्रीः स्त्रिया स्त्रियै स्त्रियाः । परत्वान्नुट् । स्त्रीणाम् स्त्रीषु । श्रीः श्रियौ श्रियः ॥ **नेयङुवङ्स्थानावस्त्री** ।१।४।४। इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तः स्त्रीभिन्नौ । हे श्रीः । श्रियै श्रिये श्रियाः श्रियः ॥ **वामि** ।१।४।५। इयङुवङ्स्थानौ स्याख्यौ यू[3] आमि वा नदीसंज्ञौ स्तः

---

१ 'अष्टन आ विभक्तौ' इत्यस्माद्विभक्तावित्यनुवर्तते ॥ २ तिसृ चतसृ इति लुप्तषष्ठीकम् ॥ ३ ईदूदन्तौ ॥

स्त्रीभिन्नौ । श्रीणाम् श्रियाम् । श्रियि श्रियाम् । धेनुर्मतिवत् ॥ **स्त्रियां च** ।७।१।९६। स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते ॥ **ऋन्नेभ्यो ङीप्** ।४।१।५। ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् । क्रोष्ट्री गौरीवत् । भूः श्रीवत् । स्वयंभूः पुंवत् ॥ **न षट्स्वस्रादिभ्यः**[1] ।४।१।१०। ङीप्टापौ न स्तः । स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ॥ याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥ स्वसा स्वसारौ । माता पितृवत् । शसि मातॄः । द्यौर्गोवत् । राः पुंवत् । नौर्ग्लौवत् ॥ इत्यजन्ताः स्त्रीलिङ्गाः ॥

## ॥ अथाजन्तनपुंसकलिङ्गप्रकरणम् ॥

**अतोऽम्** ।७।१।२४। अतोऽङ्गात् क्लीबात्स्वमोरम् । अमि पूर्वः । ज्ञानम् । एङ्ह्रस्वादिति हल्लोपः । हे ज्ञान ॥ **नपुंसकाच्च** ।७।१।१९। क्लीबादौङः शी स्यात् । भसंज्ञायाम् ॥ **यस्येति च** ।६।४।१४८। ईकारे तद्धिते च परे भस्येवर्णावर्णयोर्लोपः । इत्यलोपे प्राप्ते । (औङः श्यां प्रतिषेधो वाच्यः) ज्ञाने ॥ **जश्शसोः शिः** ।७।१।२०। क्लीबादनयोः[2] शिः स्यात् ॥ **शि सर्वनामस्थानम्** ।१।१।४२। शि इत्येतदुक्तसंज्ञं स्यात् ॥ **नपुंसकस्य झलचः** ।७।१।७२। झलन्तस्याजन्तस्य च क्लीबस्य नुम् स्यात् सर्वनामस्थाने ॥ **मिदचोऽन्त्यात्परः** ।१।१।४७। अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात्[3] । उपधादीर्घः । ज्ञानानि । पुनस्तद्वत् । शेषं पुंवत् । एवं धनवनफलादयः ॥ अ-

---

१ षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च ॥ २ जश्शसोः ॥ ३ मित्संज्ञक आगम इत्यर्थः ॥

**ड्डतरादिभ्यः पञ्चभ्यः** ।७।१।२५। एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात् ॥ **टेः** ।६।४।१४३। डिति[1] भस्य टेर्लोपः । कतरद् कतरे कतराणि । हे कतरत्। शेषं पुंवत् । एवं कतमत् इतरत् अन्यत् अन्यतरत् । अन्यतमस्य त्वन्यतममित्येव । (एकतरात्प्रतिषेधो वक्तव्यः) ॥ एकतरम् ॥ **ह्रस्वो नपुंसके प्रातिपदिकस्य** ।१।२।४७। अजन्तस्येत्येव[2] । श्रीपम् ज्ञानवत् ॥ **स्वमोर्नपुंसकात्**[3] ।७।१।२३। लुक् स्यात् । वारि ॥ **इकोऽचि विभक्तौ** ।७।१।७३। इगन्तस्य क्लीबस्य नुँमचि[4] विभक्तौ । वारिणी वारीणि । नलुमतेत्यस्यानित्यत्वात्पक्षे संबुद्धिनिमित्तो गुणः । हे वारे हे वारि । घेर्ङितीति गुणे प्राप्ते (वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन) वारिणे वारिभ्याम् । वारिणः वारिणोः । नुमचिरेति नुट् । वारीणाम् । वारिणि । हलादौ हरिवत् ॥ **अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः** ।७।१।७५। एषामनँङ्[5] स्यात् टादावचि ॥ **अल्लोपोऽनः** ।६।४।१३४। अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः । दध्ना दध्ने दध्नः दध्नोः ॥ **विभाषा ङिश्योः** ।६।४।१३६। अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपो वा स्यात् ङिश्योः परयोः । दध्नि दधनि । शेषं वारिवत् । एवमस्थिसक्थ्यक्षि । सुधि सुधिनी सुधीनि । हे सुधे, हे सुधि सुधिनेत्यादि । मधु मधुनी मधूनि । हे मधो हे मधु । सुलु

---

१ डिति परे ॥ २ क्लीबे प्रातिपदिकस्याजन्तस्य ह्रस्वः स्यात् ॥ ३ 'षड्भ्यो लुक्' इत्यस्माल्लुगित्यनुवर्तते ॥ ४ नुमागमः स्यात् ॥ ५ अनङादेशः स चोदात्तः ॥

सुलुनी सुलूनि सुलुनेत्यादि । धातृ धातृणी धातॄणि धातॄणाम् । हे धातः । एवं ज्ञात्रादयः ॥ **एच इग्घ्रस्वादेशे ।१।१।४८।** आदिश्यमानेषु ह्रस्वेषु मध्ये एँच[1] इगेव स्यात् । प्रद्यु प्रद्युनी प्रद्यूनि प्रद्युनेत्यादि । प्ररि प्ररिणी प्ररीणि प्ररिणा । एकदेशविकृतमनन्यवत् । प्रराभ्याम् । प्ररीणाम् । सुनु सुनुनी सुनूनि सुनुनेत्यादि ॥ इत्यजन्ता नपुंसकलिङ्गाः ॥

## ॥ अथ हलन्तपुंलिङ्गप्रकरणम् ॥

**हो ढः ।८।२।३१।** हस्य ढः स्याज्झलि पदान्ते च । लिट् लिड् लिहौ लिहः । लिड्भ्याम् । लिट्सु लिट्त्सु ॥ **दादेर्धातोर्घः ।८।२।३२।** उपदेशे दादेर्धातोर्हस्य घः झलि पदान्ते च ॥ **एकाचो बशो भष् झषन्तस्य स्ध्वोः ।८।२।३७।** धात्ववयवस्यैकाचो झषन्तस्य[2] बशो भष् से ध्वे पदान्ते च । धुक् धुग् दुहौ दुहः धुग्भ्याम् धुक्षु ॥ **वा द्रुहमुहष्णुहष्णिहाम् ।८।२।३३।** एषां हस्य वा घो झलि पदान्ते च । ध्रुक् ध्रुग् ध्रुट् ध्रुड् द्रुहौ द्रुहः ध्रुग्भ्याम् ध्रुड्भ्याम् ध्रुक्षु ध्रुट्त्सु । एवं मुह् ॥ **धात्वादेः षः सः ।६।१।६४।** स्नुट् स्नुड् स्नुक् स्नुग् । एवं स्निह् ॥ **इग्यणः संप्रसारणम् ।१।१।४५।** यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात् ॥ **वाह ऊठ् ।६।४।१३२।** भस्य वाहः संप्रसारणमूठ् ॥ **संप्रसारणाच्च ।६।१।१०८।** संप्रसारणादचि पूर्वरूपमेकादेशः । वृद्धिः । विश्वौहः इत्यादि ॥

---

१ 'ए ओ ऐ औ' एषां ह्रस्वे कर्तव्ये सति 'इ उ इ उ' एत एव क्रमाद्भवन्ति ॥ २ तदवयवस्य बशः स्थाने भष् स्यात्सकारे ध्वशब्दे पदान्ते च ॥

**चतुरनडुहोरामुदात्तः** ।७।१।९८। अनयोराम्स्यात्सर्वनामस्थाने परे स चोदात्तः ॥ **सावनडुहः** ।७।१।८२। अस्य नुम्स्यात्सौ परे । अनड्वान् ॥ **अम्संबुद्धौ** ।७।१।९९। हे अनड्वन् हे अनड्वाहौ हे अनड्वाहः । अनडुहा ॥ **वसुस्रंसुध्वंस्वनडुहां दः** ।८।२।७२। सान्तस्य वस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते । अनडुद्भ्यामित्यादि । सान्तेति किम् । विद्वान् । पदान्तेति किम् । स्रस्तम् । ध्वस्तम् ॥ **सहेः साडः सः** ।८।३।५६। साड्रूपस्य सहेः सस्य मूर्धन्यादेशः । तुराषाट् तुराषाड् तुरासाहौ तुरासाहः । तुराषाड्भ्यामित्यादि ॥ **दिव औत्** ।७।१।८४। दिविति प्रातिपदिकस्यौत्स्यात्सौ । सुद्यौः । सुदिवौ ॥ **दिव उत्** ।६।१।१३१। दिवोन्तादेश उकारः स्यात्पदान्ते । सुद्युभ्यामित्यादि । चत्वारः चतुरः चतुर्भिः चतुर्भ्यः ॥ **षट्चतुर्भ्यश्च** ।७।१।५५। एभ्य आमो नुडागमः ॥ **रषाभ्यां नो णः समानपदे** ।८।४।१। **अचो रहाभ्यां द्वे** ।८।४।४६। अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । चतुर्ण्णाम् ॥ **रोः सुपि** ।८।३।१६। रोरेव विसर्गः सुपि । षत्वम्, षस्य द्वित्वे प्राप्ते ॥ **शरोऽचि** ।८।४।४९। अचि परे शरो न द्वे स्तः । चतुर्षु ॥ **मो नो धातोः** ।८।२।६४। धातोर्मस्य नः पदान्ते । प्रशान् ॥ **किमः कः** ।७।२।१०३। किमः कः स्याद्विभक्तौ । कः कौ के इत्यादि ॥ शेषं

---

१ चतुरनडुहोराम् स्यात्संबुद्धौ ॥ २ षट्संज्ञकेभ्यश्चतुरश्च परस्य ॥ ३ रेफषकाराभ्यां परस्य नस्य णः स्यादेकपदे ॥ ४ सप्तमीबहुवचने ॥ ५ शर् प्रत्याहारः ॥ ६ 'अष्टन आ विभक्तौ' इत्यतो विभक्तावित्यनुवर्तते । विभक्तौ परे किम्शब्दस्य क आदेश इत्यर्थः ॥

सर्ववत् ॥ **इदमो मः** [1] **।७।२।१०८।** त्यदाद्यत्वापवादः ॥ **इदोऽय् पुंसि ।७।२।१११।** इदम [2] इदोऽय् स्यात्सौ पुंसि । अयम् । त्यदाद्यत्वे ॥ **अतो गुणे ।६।१।९७।** अपदान्तादतो गुणे पररूपमेकादेशः ॥ **दश्च ।७।२।१०९।** इदमो दस्य मः स्याद्विभक्तौ । इमौ इमे । त्यदादेः संबोधनं नास्तीत्युत्सर्गः [3] ॥ **अनाप्यकः ।७।२।११२।** अककारस्य इदम इदोऽन् स्यादापि विभक्तौ । आप् [4] इति प्रत्याहारः । अनेन ॥ **हलि लोपः ।७।२।११३।** अककारस्येदम इदो लोप आपि हलादौ । नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे ॥ **आद्यन्तवदेकस्मिन् ।१।१।२१।** एकस्मिन् क्रियमाणं कार्यमादाविवान्त इव स्यात् । सुपि चेति दीर्घः । आभ्याम् ॥ **नेदमदसोरकोः ।७।१।११।** अककारयोरिदमदसोर्भिस ऐस् न । एभिः । अस्मै एभ्यः अस्मात् । अस्य अनयोः २ एषाम् । अस्मिन् एषु ॥ **द्वितीयाटौस्स्वेनः ।२।४।३४।** इदमेतदोरेनादेशः स्यादन्वादेशे । किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । यथा अनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति । अनयोः पवित्रं कुलम् एनयोः प्रभूतं धनमिति । एनम् एनौ एनान् । एनेन एतयोः एनयोः । राजा ॥ **न ङिसंबुद्ध्योः ।८।२।८।** नस्य लोपो न ङौ संबुद्धौ च । हे राजन् । ( ङावुत्तरपदे प्रतिषेधो वक्तव्यः ) । ब्रह्मनिष्ठः । राजानौ राजानः । राज्ञः ॥ **नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति**

---

१ 'तदोः सः सौ' इत्यतः साविल्यनुवर्तते । इदमो मः स्यात्सौ परे ॥ २ इदः स्थाने ॥ ३ उत्सर्गः प्रायोवादः । हे स इति भाष्यात् ॥ ४ आबिति टा इत्यारभ्य सुपः पकारेण प्रत्याहारः ॥

।८।२।२। सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र राजाश्व इत्यादौ । इत्यसिद्धत्वादात्वमेत्वमैस्त्वं च न। यज्वा यज्वानौ यज्वानः ॥ **न संयोगाद्वमन्तात्** ।६।४।१३७। वमन्तसंयोगादनोऽकारस्य[1] लोपो न। यज्वनः यज्वना यज्वभ्याम्। ब्रह्मणः। ब्रह्मणा ॥ **इन्हन्पूषार्यम्णां शौ** ।६।४।१२। एषां शावेवोपधाया दीर्घो[2] नान्यत्र। इति निषेधे प्राप्ते ॥ **सौ च** ।६।४।१३। इन्नादीनामुपधाया दीर्घोऽसंबुद्धौ सौ। वृत्रहा। हे वृत्रहन्॥ **एकाजुत्तरपदे णः** ।८।४।१२। एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य णः । वृत्रहणौ ॥ **हो हन्तेर्ञ्णिन्नेषु** ।७।३।५४। ञिति णिति च प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वम् । वृत्रघ्नः इत्यादि । एवं शार्ङ्गिन् यशस्विन् अर्यमन् पूषन् ॥ **मघवा बहुलम्** ।६।४।१२८। मघवन्शब्दस्य वा तृइत्यन्तादेशः। ऋ इत् ॥ **उगिदचां सर्वनामस्थानेऽधातोः** ।७।१।७०। अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम्स्यात्सर्वनामस्थाने परे। मघवान् मघवन्तौ मघवन्तः। हे मघवन्। मघवद्भ्याम्। तृत्वाभावे मघवा। सुटि राजवत् ॥ **श्वयुवमघोनामतद्धिते** ।६।४।१३३। अन्नन्तानां भानामेषामतद्धिते[3] संप्रसारणम् । मघोनः मघवभ्याम्। एवं श्वन् युवन्॥ **न संप्रसारणे संप्रसारणम्** ।६।१।३७। संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात्। इति यकारस्य नेत्त्वम्। अत एव ज्ञाप-

---

१ वकारमकारान्तसंयोगात्परस्य ॥ २ 'सर्वनामस्थाने चासंबुद्धौ' इत्यनेनैव दीर्घे सिद्धे नियमार्थमिदम् ॥ ३ भसंज्ञकानाम् ॥

कादन्त्यस्य यणः पूर्वं संप्रसारणम् । यूनः । यूना युवभ्यामित्यादि । अर्वा । हे अर्वन् ॥ **अर्वणस्त्रसावनञः** ।६।४।१२७। नञा रहितस्यार्वन्नित्यस्याऽङ्गस्य तृ इत्यन्तादेशो न तु सौ । अर्वन्तौ अर्वन्तः अर्वद्भ्यामित्यादि ॥ **पथिमथ्यृभुक्षामात्** ।७।१।८५। एषामाकारोऽन्तादेशः स्यात्सौ परे ॥ **इतोऽत्सर्वनामस्थाने** ।७।१।८६। पथ्यादे[1]रिकारस्याकारः स्यात्सर्वनामस्थाने परे ॥ **थो न्थः** ।७।१।८७। पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने । पन्था पन्थानौ पन्थानः ॥ **भस्य टेर्लोपः** ।७।१।८८। भस्य[2] पथ्यादेष्टेर्लोपः । पथः पथा पथिभ्याम् । एवं मथिन् ऋभुक्षिन् ॥ **ष्णान्ता षट्** ।१।१।२४। षान्ता नान्ता च संख्या षट्संज्ञा स्यात् । पञ्चन्शब्दो नित्यं[3] बहुवचनान्तः । पञ्च पञ्च पञ्चभिः पञ्चभ्यः पञ्चभ्यः । नुट्[4] ॥ **नोपधायाः** ।६।४।७। नान्तस्योपधाया दीर्घो नामि । पञ्चानाम् पञ्चसु ॥ **अष्टन आ विभक्तौ** ।७।२।८४। हलादौ वा स्यात्[5] ॥ **अष्टाभ्य औश्** ।७।१।२१। कृताकारादष्टनो जश्शसोरौश् । अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति । अष्टौ अष्टौ अष्टाभिः अष्टाभ्यः अष्टाभ्यः अष्टानाम् अष्टासु । आत्वाभावे अष्ट पञ्चवत् ॥ **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च** ।३।२।५९। एभ्यः किन् । अञ्चेः सुप्युपपदे युजिक्रुञ्चोः केवलयोः क्रुञ्चेर्न-

---

१ पथिमथ्यृभुक्षामित्यर्थः ॥ २ भसंज्ञकस्य ॥ ३ अनुपसर्जनत्वे एव । गौणत्वे तु प्रियपञ्चा प्रियपञ्चानौ इत्याद्येकद्विवचने स्त एव ॥ ४ 'षट्चतुर्भ्यश्च' इत्यनेन ॥ ५ वैकल्पिकमिदमष्टन आत्वम् । 'अष्टनो दीर्घात्' इति सूत्रे दीर्घग्रहणाज्ज्ञापकात् ॥

लोपाभावश्च निपात्यते । कनावितौ ॥ **कृदतिङ् ।३।१।९३।** अत्र धात्वधिकारे[1] तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् ॥ **वेरपृक्तस्य ।६।१।६७।** अपृक्तस्य वस्य लोपः[2] ॥ **क्विन्प्रत्ययस्य कुः ।८।२।६२।** क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः पदान्ते । तस्यासिद्धत्वाच्चोः कुरिति कुत्वम् । ऋत्विक् ऋत्विग् ऋत्विजौ ऋत्विग्भ्याम् ॥ **युजेरसमासे ।७।१।७१।** युजेः सर्वनामस्थाने[3] नुम् स्यादसमासे । सुलोपः । संयोगान्तलोपः । कुत्वेन नस्य ङः । युङ् युञ्जौ युञ्जः युग्भ्याम् ॥ **चोः कुः ।८।२।३०।** चवर्गस्य कवर्गः स्याज्झलि पदान्ते च । सुयुक् सुयुजौ सुयुग्भ्याम् । खन् खञ्जौ खन्भ्याम् ॥ **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ।८।२।३६।** झलि पदान्ते च । जश्त्वचर्त्वे । राट् राड् राजौ राजः राड्भ्याम् । एवं विभ्राट् देवेट् विश्वसृट् ( परौ व्रजेः षः पदान्ते ) परावुपपदे व्रजेः क्विप् स्यात् दीर्घश्च पदान्ते षत्वमपि । परिव्राट् परिव्राजौ ॥ **विश्वस्य वसुराटोः ।६।३।१२८।** विश्वशब्दस्य दीर्घोऽन्तादेशः स्याद्वसौ राट्शब्दे च परे । विश्वाराट् विश्वाराड् विश्वराजौ विश्वाराड्भ्याम् ॥ **स्कोः संयोगाद्योरन्ते च ।८।२।२९।** पदान्ते झलि च परे यः संयोगस्तदाद्योः स्कोर्लोपः । भृट् । सस्य श्चुत्वेन शः । झलां जश् झशीति सस्य जः ।

---

१ 'धातोः' इति सूत्रमनुवर्तते ॥ २ 'लोपो व्योः–' इत्यतो लोप इत्यनुवर्तते ॥ ३ 'उगिदचाम्–' इत्यतः सर्वनामस्थान इति 'इदितो नुम् धातोः' इत्यतः नुमिति चानुवर्तते ॥ ४ 'झलो झलि' इत्यतो झलीति 'स्कोः संयोगाद्योरन्ते च' इत्यतोऽन्ते इति चानुवर्तते ॥ ५ व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः ॥ ६ 'ढ्लोपे–' इत्यतो दीर्घ इत्यनुवर्तते ॥ ७ सकारककारयोः ॥

भृज्जौ भृड्भ्याम् । त्यदाद्यत्वं पररूपत्वम् ॥ **तदोः सः सावनन्त्ययोः** ।७।२।१०६। त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ । स्यः त्यौ त्ये । सः तौ ते । यः यौ ये । एषः एतौ एते ॥ [1]**ङे प्रथमयोरम्** ।७।१।२८। युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः ॥ **त्वाहौ सौ** ।७।२।९४। अनयोर्मपर्यन्तस्य[2] त्वाहादेशौ स्तः ॥ [3]**शेषे लोपः** ।७।२।९०। एतयोष्टिलोपः । त्वम् अहम् ॥ **युवावौ द्विवचने** ।७।२।९२। द्वयोरुक्तावनयोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ ॥ **प्रथमायाश्च द्विवचने भाषायाम्** ।७।२।८८। औङ्येतयोरात्वं लोके । युवाम् आवाम् ॥ **यूयवयौ जसि** ।७।२।९३। अनयोर्मपर्यन्तस्य । यूयम् वयम् ॥ **त्वमावेकवचने** ।७।२।९७। एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ ॥ **द्वितीयायां च** ।७।२।८७। अनयोरात्स्यात् । त्वाम् माम् ॥ **शसो न** [4] ।७।१।२९। आभ्यां शसो नः स्यादमोऽपवादः । आदेः परस्य । संयोगान्तलोपः । युष्मान् अस्मान् ॥ **योऽचि** ।७।२।८९। अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः । त्वया मया ॥ **युष्मदस्मदोरनादेशे** ।७।२।८६। अनयोरात्स्यादनादेशे हलादौ विभक्तौ । युवाभ्याम् आवाभ्याम् युष्माभिः अस्माभिः ॥ **तुभ्यमह्यौ ङयि** ।७।२।९५। अनयोर्मपर्यन्तस्य[5] । टिलोपः । तुभ्यम् मह्यम् ॥ **भ्यसोऽभ्यम्**

---

१ ङे इति लुप्तषष्ठ्यन्तम् । प्रथमाशब्दश्च प्रथमाद्वितीयासमुदायपरः ॥ २ अत्र 'मपर्यन्तस्य' इत्यधिकारोऽस्ति । तेन सर्वे युष्मदस्मदोरादेशा मपर्यन्तस्यांशस्यैव भवन्ति ॥ ३ शेष इति षष्ठ्यर्थे सप्तमी ॥ ४ नेत्यविभक्तिकम् ॥ ५ तुभ्यमह्यौ स्तो ङयि ॥

।७।१।३०। आभ्यां परस्य । युष्मभ्यम् अस्मभ्यम् ॥ **एकवचनस्य च** ।७।१।३२। आभ्यां ङसेरत्[2] । त्वत् मत् ॥ **पञ्चम्या अत्** ।७।१।३१। आभ्यां पञ्चम्या भ्यसोऽत्स्यात् । युष्मत् ॥ अस्मत् ॥ **तवममौ ङसि** ।७।२।९६। अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि ॥ **युष्मदस्मद्भ्यां ङसोऽश्** ।७।१।२७। तव मम युवयोः आवयोः ॥ **साम आकम्** ।७।१।३३। आभ्यां परस्य साम आकम् स्यात् । युष्माकम् अस्माकम् । त्वयि मयि युवयोः आवयोः युष्मासु अस्मासु ॥ **युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ** ।८।१।२०। पदात्परयोरपादादौ[3] स्थितयोः षष्ठ्यादिविशिष्टयोर्युष्मदस्मदोर्वान्नावित्यादेशौ स्तः ॥ **बहुवचनस्य वस्नसौ** ।८।१।२१। उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः ॥ **तेमयावेकवचनस्य** ।८।१।२२। उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः ॥ **त्वामौ द्वितीयायाः** ।८।१।२३। द्वितीयैकवचनान्तयोस्त्वा मा इत्यादेशौ स्तः ॥ श्रीशस्त्वाऽवतु मापीह दत्तात्ते मेऽपि शर्म सः ॥ स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥ १ ॥ सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः ॥ सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः ॥ २ ॥ (समानवाक्ये युष्मदस्मदादेशा वक्तव्याः) अन्वादेशे[4] तु नित्यं स्युः ॥ धाता ते भक्तोऽस्ति । धाता तव भक्तोऽस्ति वा । तस्मै ते नम इत्येव । सुपात् सुपाद् सुपादौ ॥ **पादः पत्** ।६।४।१३०। पाच्छब्दान्तं यदङ्गं

१ भ्यसोऽभ्यमादेशः ॥ २ अकारादेशः ॥ ३ 'पदस्य' 'पदात्', 'अनुदात्तं सर्वमपादादौ' इत्यनुवर्तते ॥ ४ एकदोक्तस्य पुनरुक्तौ ॥

भं तदवयवस्य पाच्छब्दस्य पदादेशः। सुपदः सुपदा सुपाद्भ्याम्। अग्निमत् अग्निमद् अग्निमथौ अग्निमथः॥ **अनिदितां हल उपधायाः क्ङिति** ।६।४।२४। हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः किति ङिति। नुम्। संयोगान्तस्य लोपः। तस्य कुत्वेन ङः। प्राङ् प्राञ्चौ प्राञ्चः॥ **अचः** ।६।४।१३८। लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः॥ **चौ** ।६।३।१३८। लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः॥ प्राचः प्राचा प्राग्भ्याम्। प्रत्यङ् प्रत्यञ्चौ प्रतीचः। प्रत्यग्भ्याम्। उदङ् उदञ्चौ॥ **उद ईत्** ।६।४।१३९। उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत्। उदीचः उदीचा उदग्भ्याम्॥ **समः समि** ।६।३।९३। वप्रत्ययान्तेऽञ्चतौ। सम्यक् सम्यञ्चौ समीचः सम्यग्भ्याम्॥ **सहस्य सध्रिः** ।६।३।९५। तथा सध्र्यङ्॥ **तिरसस्तिर्यलोपे** ।६।३।९४। अलुप्ताकारेऽञ्चतौ वप्रत्ययान्ते तिरसस्तिर्यादेशः। तिर्यक् तिर्यञ्चौ तिरश्चः तिर्यग्भ्याम्॥ **नाञ्चेः पूजायाम्** ।६।४।३०। पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न॥ प्राङ् प्राञ्चौ। नलोपाभावादल्लोपो न। प्राञ्चः प्राङ्भ्याम् प्राङ्क्षु। एवं पूजार्थे प्रत्यङ्ङादयः। क्रुङ् क्रुञ्चौ क्रुङ्भ्याम्। पयोमुक् पयोमुग् पयोमुचौ पयोमुग्भ्याम्। उगित्त्वान्नुम्॥ **सान्तमहतः संयोगस्य** ।६।४।१०। सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने। महान् महान्तौ महान्तः। हे महन् महद्भ्याम्॥ **अत्वसन्तस्य चाधातोः** ।६।४।१४।

---

१ 'भस्य' इत्यधिकारे 'अल्लोपोऽनः' इत्यस्मादल्लोप इत्यनुवर्तते॥
२ वप्रत्ययान्तेऽञ्चतौ परे सहस्य सध्र्यादेश इत्यर्थः॥

अत्वन्तस्योपधाया दीर्घो धातुभिन्नासन्तस्य चासंबुद्धौ सौ परे। धीमान् धीमन्तौ धीमन्तः। हे धीमन्। शसादौ महद्वत्। भातेर्डवतुः। डित्त्वसामर्थ्यादभस्यापि टेर्लोपः। भवान् भवन्तौ। शत्रन्तस्य[1] तु भवन्॥ **उभे अभ्यस्तम्** ।६।१।५। षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः॥ **नाभ्यस्ताच्छतुः** ।७।१।७८। अभ्यस्तात्परस्य शतुर्नुम्न। ददत् ददद् ददतौ ददतः॥ **जक्षित्यादयः षट्** ।६।१।६। षट् धातवोऽन्ये जक्षितिश्च सप्तम एते अभ्यस्तसंज्ञाः स्युः। जक्षत् जक्षद् जक्षतौ जक्षतः। एवं जाग्रत् दरिद्रत् शासत् चकासत्। गुप् गुपौ गुपः गुब्भ्याम्॥ **त्यदादिषु दृशोऽनालोचने कञ्च** ।३।२।६०। त्यदादिषूपपदेष्वज्ञानार्थाद्दृशेः कन्स्यात्। चात्क्विन्॥ **आ सर्वनाम्नः** ।६।३।९१। सर्वनाम्न आकारोऽन्तादेशः स्याद्दृग्दृशवतुषु[2]। तादृशौ तादृशः तादृग्भ्याम्। व्रश्चेति षः। जश्त्वचर्त्वे। विट् विड् विशौ विशः विड्भ्याम्॥ **नशेर्वा** ।८।२।६३। नशेः कवर्गोऽन्तादेशो वा पदान्ते। नक् नग् नट् नड् नशौ नशः। नग्भ्याम् नड्भ्याम्॥ **स्पृशोऽनुदके क्विन्** ।३।२।५८। अनुदके सुप्युपपदे स्पृशेः क्विन्। घृतस्पृक् घृतस्पृग् घृतस्पृशौ घृतस्पृशः। दधृक् दधृग् दधृषौ दधृग्भ्याम्। रत्नमुट् रत्नमुड् रत्नमुषौ रत्नमुड्भ्याम्। षट् षड् षड्भिः षड्भ्यः षण्णाम् षट्सु षट्त्सु। रुत्वं प्रति षत्वस्यासिद्धत्वात्ससजुषो रुरिति रुत्वम्॥ **र्वोरुपधाया दीर्घ इकः** ।८।२।७६। रेफवान्तयोरुपधाया इको दीर्घः

---

१ शत्रन्तस्य त्वत्वन्तत्वाभावान्न दीर्घः॥ २ 'दृग्दृशवतुषु' इति सूत्रमनुवर्तते॥

पदान्ते[1] । पिपठीः पिपठीषौ पिपठीर्भ्याम् ॥ **नुम्विसर्जनीयशर्व्यवायेऽपि ।८।३।५८।** एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः ष्टुत्वेन[2] पूर्वस्य षः । पिपठीष्षु पिपठीःषु । चिकीः चिकीर्षौ चिकीर्भ्याम् चिकीर्षु । विद्वान् विद्वांसौ हे विद्वन् ॥ **वसोः संप्रसारणम् ।६।४।१३१।** वस्वन्तस्य भस्य संप्रसारणं स्यात् । विदुषः । वसुस्रंस्विति दः । विद्वद्भ्याम् ॥ **पुंसोऽसुङ् ।७।१।८९।** सर्वनामस्थाने[3] विवक्षिते पुंसोऽसुङ् स्यात् । पुमान् हे पुमन् पुमांसौ पुंसः । पुम्भ्यां पुंसु । ऋदुशनेत्यनङ् । उशना उशनसौ । ( अस्य संबुद्धौ वानङ् नलोपश्च वा वाच्यः ) हे उशन हे उशनन् हे उशनः । उशनसौ उशनोभ्याम् उशनस्सु । अनेहा अनेहसौ हे अनेहः । वेधाः वेधसौ । हे वेधः । वेधोभ्याम् ॥ **अदस औ सुलोपश्च ।७।२।१०७।** अदस औत्स्यात्सौ परे[4] सुलोपश्च । तदोरिति सः । असौ । त्यदाद्यत्वं पररूपत्वम् । वृद्धिः ॥ **अदसोऽसेर्दादुदो मः ।८।२।८०।** अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य मश्च । आन्तरतम्याद्ध्रस्वस्य उः दीर्घस्य ऊः । अमू । जसः शी । गुणः ॥ **एत ईद्बहुवचने ।८।२।८१।** अदसो दात्परस्यैत ईदस्य मो बह्वर्थोक्तौ । अमी । पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे । अमुम् अमू अमून् । मुत्वे कृते घिसंज्ञायां नाभावः ॥ **न मु ने ।८।२।३।** नाभावे कर्तव्ये कृते च मुभावो नासिद्धः । अमुना अमूभ्यां अ-

---

१ 'झलां जशोऽन्ते' इत्यस्मादन्त इत्यनुवर्तते ॥ २ 'ष्टुना ष्टुः' इत्यनेन ॥ ३ 'इतोऽत्सर्वनामस्थाने' इत्यतः सर्वनामस्थान इत्यनुवर्तते ॥ ४ 'तदोः सः सौ–' इत्यतः सावित्यनुवर्तते ॥

मीभिः । अमुष्मै अमीभ्यः । अमुष्मात् अमुष्य अमुयोः अमीषाम् अमुष्मिन् ॥ इति हलन्ताः पुंलिङ्गाः ॥

## ॥ अथ हलन्तस्त्रीलिङ्गप्रकरणम् ॥

**नहो धः ।८।२।३४।** नहो हस्य धः स्याज्झलि पदान्ते च ॥ **नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ।६।३।११६।** क्विबन्तेषु पूर्वपदस्य दीर्घः । उपानत् उपानहौ उपानत्सु । क्विन्नन्तत्वात्कुत्वेन घः । उष्णिक् उष्णिहौ उष्णिग्भ्याम् । द्यौः दिवौ दिवः द्युभ्याम् । गीः गिरौ गिरः । एवं पूः । चतस्रः चतसृणाम् । का के काः । सर्वावत् ॥ **यः सौ ।७।२।११०।** इदमो दस्य यः । इयम् । त्यदाद्यत्वं पररूपत्वम् । टाप् । दश्चेति मः । इमे इमाः । इमाम् अनया । हलि लोपः । आभ्याम् आभिः । अस्यै अस्याः अनयोः आसाम् । अस्याम् आसु । त्यदाद्यत्वम् । टाप् । स्या त्ये त्याः । एवं तद् एतद् । वाक् वाग् वाचौ वाग्भ्याम् वाक्षु । अप्शब्दो नित्यं बहुवचनान्तः । अप्तृन्निति दीर्घः । आपः अपः ॥ **अपो भि ।७।४।४८।** अपस्तकारो भादौ प्रत्यये । अद्भिः अद्भ्यः अपाम् अप्सु । दिक् दिग् दिशः दिग्भ्याम् । त्यदादिष्विति दृशेः क्विन्विधानादन्यत्रापि कुत्वम् । दृक् दृग् दृशौ दृग्भ्याम् । त्विट् त्विषौ त्विड्भ्याम् । ससजुषोरिति रुत्वम् । सजूः सजुषौ सजूर्भ्याम् । आशीः आशिषौ आशीर्भ्याम् । असौ । उत्वमत्वे । अमू अमूः । अमुया अमूभ्याम् अमूभिः । अमुष्यै अमूभ्यः । अमुष्याः अमुयोः अमूषाम् । अमुष्याम् अमूषु ॥ इति हलन्ताः स्त्रीलिङ्गाः ॥

---

१ 'झलो झलि' इत्यस्माज्झलीत्यनुवर्तते ॥

# अथ हलन्तनपुंसकलिङ्गप्रकरणम् ॥

स्वमोर्लुक् । दत्वम् । स्वनडुत् स्वनडुद् स्वनडुही । चतुरनडुहोरित्याम् । स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् । वाः वारी वारि वार्भ्याम् । चत्वारि । किम् के कानि । इदम् इमे इमानि । ( अन्वादेशे नपुंसके एनद्वक्तव्यः ) एनत् एने एनानि । एनेन एनयोः । अहः । विभाषा ङिश्योः । अह्नी अहनी अहानि ॥ **अहन्** ।८।२।६८। अहन्नित्यस्य रुः पदान्ते । अहोभ्याम् । दण्डि दण्डिनी दण्डीनि । दण्डिना दण्डिभ्याम् । सुपथि । टेर्लोपः । सुपथी सुपन्थानि । ऊर्क् ऊर्जी ऊर्ञ्जि । नरजानां संयोगः । तत् ते तानि । यत् ये यानि । एतत् एते एतानि । गवाक् गोची गवाञ्चि । पुनस्तद्वत् । गोचा । गवाग्भ्याम् । शकृत् शकृती शकृन्ति । ददत् ॥ **वा नपुंसकस्य** ।७।१।७९। अभ्यस्तात्परो यः श[1]ता तदन्तस्य क्लीबस्य वा नुम् सर्वनामस्थाने । ददन्ति ददति । तुदत् ॥ **आच्छीनद्योर्नुम्** ।७।१।८०। अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्य नुम् वा शीनद्योः । तुदन्ती तुदती तुदन्ति । दीव्यत् दीव्यन्ती दीव्यती दीव्यन्ति । धनुः धनुषी । सान्तेति दीर्घः । नुम्विसर्जनीयेति षः । धनूंषि धनुषा धनुर्भ्याम् । एवं चक्षुर्हविरादयः । पयः पयसी पयांसि । पयसा पयोभ्याम् । सुपुम् सुपुंसी सुपुमांसि । अदः । विभक्तिकार्यम् । उत्वमत्वे । अमू अमूनि । शेषं पुंवत् ॥ इति हलन्ता नपुंसकलिङ्गाः ॥

---

१ 'नाभ्यस्ताच्छतुः' इत्यस्मादभ्यस्ताच्छतुरित्यनुवर्तते ॥

## ॥ अथाव्ययप्रकरणम् ॥

**स्वरादिनिपातमव्ययम्** ।१।१।३७। स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः । स्वर् अन्तर् प्रान्तर् पुनर् सनुतर् उच्चैस् नीचैस् शनैस् ऋधक् ऋते युगपत् आरात् पृथक् ह्यस् श्वस् दिवा रात्रौ सायं चिरम् मनाक् ईषत् जोषम् तूष्णीम् बहिस् अवस् समया निकषा स्वयम् वृथा नक्तम् नञ् हेतौ इद्धा अद्धा सामिवत् ब्राह्मणवत् क्षत्रियवत् सना सनत् सनात् उपधा तिरस् अन्तरा अन्तरेण ज्योक् कम् शम् सहसा विना नाना स्वस्ति स्वधा अलम् वषट् श्रौषट् वौषट् अन्यत् अस्ति उपांशु क्षमा विहायसा दोषा मृषा मिथ्या मुधा पुरा मिथो मिथस् प्रायस् मुहुस् प्रवाहुकम् प्रवाहिका आर्यहलम् अभीक्ष्णम् साकं सार्धम् नमस् हिरुक् धिक् अथ अम् आम् प्रताम् प्रशान् मा माङ् । आकृतिगणोऽयम् । च वा ह अह एव एवम् नूनम् शश्वत् युगपत् भूयस् कूपत् सूपत् कुवित् नेत् चेत् चण् यत्र कच्चित् नह हन्त माकिः माकिम् नकिः नकिम् नकिर् माङ् नञ् यावत् तावत् त्वै द्वै न्वै रै श्रौषट् वौषट् स्वाहा स्वधा वषट् तुम् तथाहि खलु किल अथ सुष्ठु स्म आदह । उपसर्गविभक्तिस्वरप्रतिरूपकाश्च । अवदत्तम् अहंयुः अस्तिक्षीरा अ आ इ ई उ ऊ ए ऐ ओ औ पशु शुकम् यथाकथाच पाट् प्याट् अङ्ग है हे भोः अये द्य विषु एकपदे युत आतः । चादिरप्याकृतिगणः । तसिलादयः प्राक्पाशपः । शस्प्रभृतयः प्राक्समासान्तेभ्यः । अम् आम् कृत्वोऽर्थाः तसिवती । नानाञौ एतदन्तमप्यव्ययम् । अत इत्यादि ॥ **कृन्मेजन्तः** ।१।१।३९। कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् । सारं-

स्मारम् जीवसे पिबध्यै ॥ **क्त्वातोऽसुन्कसुनः** ।१।१।४०। एतदन्तमव्ययम् । कृत्वा उदेतोः विसृपः ॥ **अव्ययीभावश्च** ।१।१।४१। अधिहरि ॥ **अव्ययादाप्सुपः** ।२।४।८२। अव्ययाद्विहितस्यापः सुपश्च लुक्[1] । तत्र शालायाम् । अथ । सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥ वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ॥ आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥ २ ॥ अवगाहः वगाहः अपिधानं पिधानम् ॥ इत्यव्ययानि ॥

---

## ॥ अथ तिङन्ते भ्वादिगणप्रकरणम् ॥

लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ् । एषु पञ्चमो लकारश्छन्दोमात्रगोचरः ॥ **लः कर्मणि च भावे चाकर्मकेभ्यः** ।३।४।६९। लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च ॥ **वर्तमाने लट्** ।३।२।१२३। वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात् । अटावितौ । उच्चारणसामर्थ्याल्लस्य नेत्वम् । भू सत्तायाम् । कर्तृविवक्षायाम् भू ल इति स्थिते ॥ **तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्** ।३।४।७८। एतेऽष्टादश लादेशाः[2] स्युः ॥ **लः परस्मैपदम्** ।१।४।९९। लादेशाः परस्मैपदसंज्ञाः स्युः ॥ **तङानावात्मनेपदम्** ।१।४।१००। तङ् प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः । पूर्वसंज्ञाऽपवादः ॥ **अनुदात्तङित आत्मनेप-**

---

१ 'ण्यक्षत्रियार्षञितो यूनि लुक्–' इत्यस्माल्लुगित्यनुवर्तते ॥ २ 'लस्य' इत्यधिकारो वर्तते ॥

**दम्** ।१।३।१२। अनुदात्तेतो ङि[1]तश्च धातोरात्मनेपदं स्यात्क[2]र्तृगामिनि क्रियाफले ॥ **शेषात्कर्तरि परस्मैपदम्** ।१।३।७८। आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात् ॥ **स्वरित[3]ञितः कर्त्रभिप्राये क्रियाफले** ।१।३।७२। **तिङस्त्रीणि त्रीणि प्रथममध्योत्तमाः** ।१।४।१०१। तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः ॥ **तान्येकवचनद्विवचनबहुवचनान्येकशः** ।१।४।१०२। लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि प्रत्येकमेकवचनादिसंज्ञानि स्युः ॥ **युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः** ।१।४।१०५। तिङ्वाच्यकारकवाचिनि युष्मद्यप्रयुज्यमाने प्रयुज्यमाने च मध्यमः ॥ **अस्मद्युत्तमः** ।१।४।१०७। [4]तथाभूतेऽस्मद्युत्तमः ॥ **शेषे प्रथमः** ।१।४।१०८। मध्यमोत्तमयोरविषये प्रथमः स्यात् । भू ति इति जाते ॥ **तिङ्शित्सार्वधातुकम्** ।३।४।११३। तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ॥ **कर्तरि शप्**।३।१।६८। कर्त्रर्थे सार्वधातुके परे धातोः शप् ॥ **सार्वधातुकार्धधातुकयोः** ।७।३।८४। अनयोः परयोरिगन्ताङ्गस्य गुणः । अवादेशः । भवति भवतः ॥ **झोऽन्तः** ।७।१।३। [5]प्रत्ययावयवस्य झस्यान्तादेशः । अतो गुणे । भवन्ति । भवसि भवथः भवथ ॥ **अतो दीर्घो यञि** ।७।३।१०१। अतोऽङ्गस्य दीर्घो यञादौ

१ ङितश्चेत्यत्र विशेष्यविशेषणभावेन तदन्तलाभाद्यगन्तादप्यात्मनेपदम् ॥ २ स्वरितञित इत्यस्मात्कर्त्रभिप्राये क्रियाफले इत्यपकृष्यते ॥ ३ स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले ॥ ४ अत्राद्यन्तपदरहितं 'युष्मद्युपपद–' इति सूत्रमनुवर्तते तदाह तथेत्यादि ॥ ५ प्रत्ययावयवस्येति तेनोज्झितेत्यादौ न दोषः ॥

सार्वधातुके । भवामि भवावः भवामः । स भवति तौ भवतः ते भवन्ति । त्वं भवसि युवां भवथः यूयं भवथ । अहं भवामि आवां भवावः वयं भवामः ॥ **परोक्षे लिट् ।३।२।११५।** भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः ॥ **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ।३।४।८२।** लिटस्तिबादीनां नवानां णलादयो नव स्युः । भू अ इति स्थिते ॥ **भुवो वुग्लुङ्लिटोः ।६।४।८८।** भुवो वुगागमः स्यात् लुङ्लिटोरचि ॥ **लिटि धातोरनभ्यासस्य ।६।१।८।** लिटि परेऽनभ्यासावयवस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य । भूव् भूव् अ इति स्थिते ॥ **पूर्वोऽभ्यासः ।६।१।४।** अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात् ॥ **हलादिः शेषः ।७।४।६०।** अभ्यासस्यादिर्हल् शिष्यते अन्ये हलो लुप्यन्ते ॥ इति वलोपः ॥ **ह्रस्वः ।७।४।५९।** अभ्यासस्याचो ह्रस्वः स्यात् ॥ **भवतेरः ।७।४।७३।** भवतेरभ्यासस्योकारस्य अः स्याल्लिटि ॥ **अभ्यासे चर्च ।८।४।५४।** अभ्यासे झलां चरः स्युर्जशश्च । झलां जशः खयां चर इति विवेकः । बभूव बभूवतुः बभूवुः ॥ **लिट् च ।३।४।११५।** लिडादेशस्तिङार्धधातुकसंज्ञः ॥ **आर्धधातुकस्येड्वलादेः ।७।२।३५।** वलादेरार्धधातुकस्येडागमः स्यात् । बभूविथ बभूवथुः बभूव । बभूव बभूविव बभूविम ॥ **अनद्यतने लुट् ।३।३।१५।** भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् ॥

---

१ 'अचि श्नु–' इत्यतोऽचीत्यनुवर्तते ॥ २ 'एकाचो द्वे प्रथमस्य'। 'अजादेर्द्वितीयस्य' इत्यनुवर्तते ॥ ३ 'अत्र लोपोऽभ्यासस्य' इत्यस्मादभ्यासस्येत्यनुवर्तते ॥ ४ अतीतरात्रेरन्त्ययामेन आगामिन्याः पूर्वयामेन च सहितः कालोऽद्यतनस्तद्भिन्नोऽनद्यतनः ॥

**स्यतासी लृलुटोः** ।३।१।३३। धातोः स्यतासी एतौ प्रत्ययौ स्तो लृलुटोः परतः शबाद्यपवादः । लृ इति लृङ्लृटोर्ग्रहणम् ॥ **आर्धधातुकं शेषः** ।३।४।११४। तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात् । इट् ॥ **लुटः प्रथमस्य डारौरसः** ।२।४।८५। डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । भविता ॥ **तासस्त्योर्लोपः** ।७।४।५०। तासेरस्तेश्च लोपः स्यात्सादौ प्रत्यये परे ॥ **रि च** ।७।४।५१। रादौ प्रत्यये तथा । भवितारौ भवितारः । भवितासि भवितास्थः भवितास्थ । भवितास्मि भवितास्वः भवितास्मः ॥ **लृट् शेषे च** ।३।३।१३। भविष्यदर्थाद्धातोर्लृट् स्यात्क्रियार्थायां क्रियायां सत्यामसत्यां च । इट् । भविष्यति भविष्यतः भविष्यन्ति । भविष्यसि भविष्यथः भविष्यथ । भविष्यामि भविष्यावः भविष्यामः ॥ **लोट् च** ।३।३।१६२। विध्याद्यर्थेषु धातोर्लोट् ॥ **आशिषि लिङ्लोटौ** ।३।३।१७३। **एरुः** ।३।४।८६। लोट इकारस्य उः । भवतु ॥ **तुह्योस्तातङाशिष्यन्यतरस्याम्** ।७।१।३५। आशिषि तुह्योस्तातङ् वा । परत्वात्सर्वादेशः । भवतात् ॥ **लोटो लङ्वत्** ।३।४।८५। लोटस्तामादयः सलोपश्च ॥ **तस्थस्थमिपां तांतंतामः** ।३।४।१०१। ङितश्चतुर्णां तामादयः क्रमात्स्युः । भवताम् भवन्तु ॥ **सेर्ह्यपिच्च** ।३।४।८७। लोटः सेर्हिः सोऽपिच्च ॥ **अतो हेः** ।६।४।१०५। अतः परस्य हेर्लुक्[1] । भव भवतात् भवतम् भवत ॥ **मेर्निः** ।३।४।८९। लोटो मेर्निः स्यात् ॥ **आडुत्तमस्य पिच्च** ।३।४।९२। लोडुत्तमस्याट् पिच्च । हिन्योरुत्वं न । इत्वोच्चारणसामर्थ्यात् ।

---

१ 'चिणो लुक्' इत्यस्माल्लुगित्यनुवर्तते ॥

भवानि ॥ **ते प्राग्धातोः ।१।४।८०।** ते गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्याः ॥ **आनि लोट् ।८।४।१६।** उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात् । प्रभवाणि ॥ ( दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः ) दुस्थितिः । दुर्भवानि । ( अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् ) अन्तर्भवाणि ॥ **नित्यं ङितः ।३।४।९९।** सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः[1] । अलोऽन्त्यस्येति सलोपः । भवाव भवाम ॥ **अनद्यतने लङ् ।३।२।१११।** अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात् ॥ **लुङ्लङ्लृङ्क्ष्वडुदात्तः ।६।४।७१।** एष्वङ्गस्याट्[2] ॥ **इतश्च ।३।४।१००।** ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्य लोपः । अभवत् अभवताम् अभवन् । अभवः अभवतम् अभवत । अभवम् अभवाव अभवाम ॥ **विधि[3]निमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ।३।३।१६१।** एष्वर्थेषु धातोर्लिङ् ॥ **यासुट् परस्मैपदेषूदात्तो ङिच्च ।३।४।१०३।** लिङः परस्मैपदानां यासुडागमो ङिच्च ॥ **लिङः सलोपोऽनन्त्यस्य ।७।२।७९।** सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः । इति प्राप्ते ॥ **अतो येयः ।७।२।८०।** अतः परस्य सार्वधातुकावयवस्य यास् इत्यस्य इय् । गुणः ॥ **लोपो[4] व्योर्वलि ।६।१।६६।** भवेत् भवेताम् ॥ **झेर्जुस् ।३।४।१०८।** लिङो झेर्जुस् स्यात् । भवेयुः । भवेः भवे-

---

१ 'इतश्च लोपः–' इत्यस्माल्लोप इत्यनुवर्तते ॥ २ अडागमः स चोदात्तः ॥ ३ विधिः प्रेरणम् । निमन्त्रणं नियोगकरणम् । आमन्त्रणं कामचारानुज्ञा । अधीष्टः सत्कारपूर्वको व्यापारः ॥ ४ वकारयकारयोर्लोपः स्याद्वलि परे ॥

तम् भवेत । भवेयम् भवेव भवेम ॥ **लिङाशिषि ।३।४।११६।** आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात् ॥ **किदाशिषि ।३।४।१०४।** आशिषि लिङो यासुट् । कित् । स्कोः संयोगाद्योरिति सलोपः ॥ **क्किति च ।१।१।५।** गित्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः । भूयात् भूयास्ताम् भूयासुः । भूयाः भूयास्तम् भूयास्त । भूयासम् भूयास्व भूयास्म ॥ **लुङ् ।३।२।११०।** भूतार्थे धातोर्लुङ् स्यात् ॥ **माङि लुङ् ।३।३।१७५।** सर्वलकारापवादः ॥ **स्मोत्तरे लङ् च ।३।३।१७६।** स्मोत्तरे लङ् स्याच्चाल्लुङ् ॥ **च्लि लुङि ।३।१।४३।** शबाद्यपवादः ॥ **च्लेः सिच् ।३।१।४४।** इचावितौ ॥ **गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ।२।४।७७।** एभ्यः सिचो लुक् स्यात् । गापाविहेणादेशपिबती गृह्येते ॥ **भूसुवोस्तिङि ।७।३।८८।** भू सू एतयोः सार्वधातुके तिङि परे गुणो न । अभूत् अभूताम् अभूवन् । अभूः अभूतम् अभूत । अभूवम् अभूव अभूम ॥ **न माङ्योगे ।६।४।७४।** अडाटौ न स्तः । मा भवान्भूत् मा स्म भवत् मा स्म भूत् ॥ **लिङ्निमित्ते लृङ् क्रियातिपत्तौ ।३।३।१३९।** हेतुहेतुमद्भावादि लिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम् । अभविष्यत् अभविष्यताम् अभविष्यन् । अभविष्यः अभविष्यतम् अभविष्यत । अभविष्यम् अभविष्याव अभविष्याम । सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत् इत्यादि ज्ञेयम् । अत सातत्यगमने २ । अ-

१ धातोश्च्लिप्रत्ययः स्याल्लुङि परे ॥ २ 'लुङ्लङ्—' इत्यस्मात् अडिति 'आडजादीनाम्' इत्यस्मात् आडिति चानुवर्तते ॥

तति ॥ **अत आदेः** ।७।४।७०। [1]अभ्यासस्यादेरतो दीर्घः स्यात् । आत आततुः आतुः । आतिथ आतथुः आत । आत आतिव आतिम । अतिता अतिष्यति अततु ॥ **आडजादीनाम्** ।६।४।७२। अजादेरङ्गस्याट् [2]लुङ्लङ्लृङ्क्षु । आतत् अतेत् अत्यात् अत्यास्ताम् । लुङि सिचि इडागमे कृते ॥ **अस्तिसिचोऽपृक्ते** ।७।३।९६। विद्यमानात्सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः ॥ **इट ईटि** ।८।२।२८। इटः परस्य [3]सस्य लोपः स्यादीटि परे । ( सिज्लोप एकादेशे सिद्धो वाच्यः ) । आतीत् आतिष्टाम् ॥ **सिजभ्यस्तविदिभ्यश्च** ।३।४।१०९। सिचोऽभ्यस्ताद्विदेश्च परस्य [4]ङित्संबन्धिनो झेर्जुस् । आतिषुः । आतीः आतिष्टम् आतिष्ट । आतिषम् अतिष्व आतिष्म । आतिष्यत् ॥ षिध गत्याम् ३ ॥ **ह्रस्वं लघु** ।१।४।१०। **संयोगे गुरु** ।१।४।११। संयोगे परे ह्रस्वं गुरु स्यात् ॥ **दीर्घं च** ।१।४।१२। गुरु स्यात् ॥ **पुगन्तलघूपधस्य च** ।७।३।८६। पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः सार्वधातुकार्धधातुकयोः । धात्वादेरिति सः । सेधति । षत्वम् । सिषेध ॥ **असंयोगाल्लिट् कित्** ।१।२।५। असंयोगात्परोऽपिल्लिट् कित्स्यात् । सिषिधतुः । सिषेधिथ सिषिधथुः सिषिध । सिषेध सिषिधिव सिषिधिम । सेधिता सेधिष्यति सेधतु असेधत् सिध्यात् असेधीत् असेधिष्यत् । एवं चिती

---

१ 'अत्र लोपोऽभ्यासस्य' इत्यस्मादभ्यासस्येति 'दीर्घ इणः किति' इत्यस्मात् दीर्घ इति चानुवर्तते ॥ २ 'लुङ्लङ्–' इति पूर्वसूत्रमनुवर्तते ॥ ३ 'संयोगान्तस्य लोपः' 'रात्सस्य' एताभ्यां क्रमात् लोपः सस्येति चानुवर्तते ॥ ४ 'यासुट् पर–' इत्यस्मात् । 'ङिच्चे'ति 'झेर्जुस्' इति सूत्रं चानुवर्तते ॥

संज्ञाने ४। शुच शोके ५। गद व्यक्तायां वाचि ६। गदति ॥ **नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ।८।४।१७।** उपसर्गस्थान्निमित्तात्परस्य नेर्णः स्याद्गदादिषु परेषु । प्रणिगदति ॥ **कुहोश्चुः ।७।४।६२।** अभ्यासकवर्गहकारयोश्चवर्गादेशः ॥ **अत उपधायाः ।७।२।११६।** उपधाया अतो वृद्धिः[1] स्यात् ञ्णिति णिति च प्रत्यये परे । जगाद जगदतुः जगदुः । जगदिथ जगदथुः जगद ॥ **णलुत्तमो वा ।७।१।९१।** उत्तमो णल्वा णित्स्यात् । जगाद जगद जगदिव जगदिम । गदिता गदिष्यति गदतु अगदत् गदेत् गद्यात् ॥ **अतो हलादेर्लघोः ।७।२।७।** हलादेर्लघोर्वृद्धिर्वेडादौ[2] परस्मैपदे सिचि । अगादीत् अगदीत् । अगदिष्यत् । णद अव्यक्ते शब्दे ७ ॥ **णो नः ।६।१।६५।** धात्वादेर्णस्य नः । णोपदेशास्त्वनर्द्नाटिनाथ्नाध्नन्द्नक्कनॄनृतः ॥ **उपसर्गादसमासेऽपि णोपदेशस्य ।८।४।१४।** उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य[3] णः । प्रणदति प्रणिनदति । ननाद ॥ **अत एकहल्मध्येऽनादेशादेर्लिटि ।६।४।१२०।** लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात एत्वमभ्यासलोपश्च[4] किति लिटि । नेदतुः नेदुः ॥ **थलि च सेटि ।६।४।१२१।** प्रागुक्तं स्यात् । नेदिथ नेदथुः नेद । ननाद ननद नेदिव नेदिम । नदिता नदिष्यति नदतु अनदत् नदेत् नद्यात् । अनादीत् अनदीत् अनदिष्यत् । टुनदि समृद्धौ ८ ॥

---

१ 'मृजेर्वृद्धिः' 'अचो ञ्णिति' इत्येताभ्यां वृद्धिः ञ्णितीति चानुवर्तते ॥ २ 'सिचि वृद्धिः' इत्यादिसूत्रेभ्यो वृद्ध्यादीनामनुवृत्तिः ॥ ३ 'एकाजु–' इत्यस्माण्ण इत्यनुवर्तते ॥ ४ 'ध्वसोरेद्धावभ्यासलोपश्च' इत्यनुवर्तते ॥

**आदिर्ञिटुडवः** ।१।३।५। [1]उपदेशे धातोराद्या एते इतः स्युः ॥ **इदितो नुम् धातोः** ।७।१।५८। नन्दति ननन्द नन्दिता नन्दिष्यति नन्दतु अनन्दत् नन्देत् नन्द्यात् अनन्दीत् अनन्दिष्यत् । अर्च पूजायाम् ९ । अर्चति ॥ **तस्मान्नुड् द्विहलः** ।७।४।७१। द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात् । आनर्च आनर्चतुः अर्चिता अर्चिष्यति अर्चतु आर्चत् अर्चेत् अर्च्यात् आर्चीत् आर्चिष्यत् । व्रज गतौ १० । व्रजति वव्राज व्रजिता व्रजिष्यति व्रजतु अव्रजत् व्रजेत् व्रज्यात् ॥ **वदव्रजहलन्तस्याचः** ।७।२।३। एषामचो वृद्धिः सिचि परस्मैपदेषु । अव्राजीत् अव्रजिष्यत् । कटे वर्षावरणयोः ११ । कटति चकाट कटिता कटिष्यति कटतु अकटत् कटेत् कट्यात् ॥ **ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्** ।७।२।५। हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च [2]वृद्धिर्नेडादौ सिचि । अकटीत् अकटिष्यत् । गुपू रक्षणे १२ ॥ **गुपूधूपविच्छिपणिपनिभ्य आयः** ।३।१।२८। एभ्य आयः प्रत्ययः स्यात् स्वार्थे ॥ **[3]सनाद्यन्ता धातवः** ।३।१।३२। सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञकाः । धातुत्वाल्लडादयः । गोपायति ॥ **आयादय आर्धधातुके वा** ।३।१।३१। आर्धधातुकविवक्षायामायादयो[4] वा स्युः । ( कास्यनेकाच आम् वक्तव्यः ) । लिटि आस्कासोराम्विधानान्मस्य नेत्वम् ॥ **अतो लोपः** ।६।४।४८। [5]आर्धधातु-

१ 'उपदेशेऽजनुनासिक इत्' इत्यनुवर्तते ॥ २ 'सिचि वृद्धिः'–'नेटि' इति चानुवर्तते ॥ ३ सन्क्यच्काम्यच्क्यङ्क्यषोऽथाऽऽचारक्विब्णिज्यङौ तथा ॥ यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः ॥ ४ आयेयङ्णिङ इत्यर्थः ॥ ५ 'आर्धधातुके' इत्यनुवर्तते ॥

कोपदेशे यददन्तं तस्यातो लोप आर्धधातुके ॥ **आमः** ।२।४।८१। आमः परस्य लुक् ॥ **कृञ् चानुप्रयुज्यते लिटि** ।३।१।४०। आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते । तेषां द्वित्वादि ॥ **उरत्** ।७।४।६६। अभ्यासऋवर्णस्यात् । वृद्धिः । गोपायाञ्चकार । द्वित्वात्परत्वाद्यणि प्राप्ते ॥ **द्विर्वचनेऽचि** ।१।१।५९। द्वित्वनिमित्तेऽचि अच आदेशो न द्वित्वे कर्तव्ये । गोपायाञ्चक्रतुः ॥ **एकाच उपदेशेऽनुदात्तात्** ।७।२।१०। उपदेशे यो धातुरेकाजनुदात्तश्च तत आर्धधातुकस्येण्न ॥ ऊदृदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः । वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥ कान्तेषु शक्लेकः । चान्तेषु पच्मुच्रिच्वच्विच्सिचः षट् । छान्तेषु प्रच्छेकः । जान्ते त्यज्निजिर्भज्भञ्ज्भुज्भ्रस्ज्मस्ज्यज्युज्रुज्रञ्ज्विजिर्स्वञ्जसञ्जसृजः पञ्चदश । दान्तेषु अद्क्षुद्खिद्छिद्तुद्नुद्पद्यभिद्विद्यविनद्विन्दशद्सद्स्विद्यस्कन्दहदः षोडश । धान्तेषु क्रुध्क्षुध्बुध्बन्ध्युध्रुध्राध्व्यध्शुध्साध्सिध्या एकादश । नान्तेषु मन्यहनौ द्वौ । पान्तेषु आप्क्षिप्छुप्तप्तिप्तृप्यदृप्यलिप्लुप्वप्शप्स्वप्सृपस्त्रयोदश । भान्तेषु यभ्रभ्लभस्त्रयः । मान्तेषु गम्नम्यम्रमश्चत्वारः । शान्तेषु क्रुश्दंश्दिश्दृश्मृश्रिश्रुश्लिश्विश्स्पृशो दश । षान्तेषु कृष्त्विष्तुष्द्विष्दुष्पुष्यपिष्विष्शिष्शुष्श्लिष एकादश । सान्तेषु घसवसती द्वौ । हान्तेषु दह्दिह्दुह्नह्मिह्रुह्लिह्वहोऽष्टौ । अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम् ॥ गोपायाञ्चकर्थ गोपायाञ्चक्रथुः

---

१ 'ण्यक्षत्रिय–' इत्यतो लुगनुवर्तते ॥ २ 'नेड्वशि कृति' इत्यतो नेट् इत्यनुवर्तते ॥

गोपायाञ्चक्र । गोपायाञ्चकार गोपायाञ्चकर गोपायाञ्चकृव गोपायाञ्चकृम । गोपायाम्बभूव गोपायामास । जुगोप जुगुपतुः जुगुपुः ॥ **स्वरतिसूतिसूयतिधूञूदितो वा ।७।२।४४।** स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड्वा स्यात्[1] । जुगोपिथ जुगोप्थ गोपायिता गोपिता गोप्ता गोपायिष्यति गोपिष्यति गोप्स्यति । गोपायतु अगोपायत् गोपायेत् ॥ **नेटि ।७।२।४।** इडादौ सिचि हलन्तस्य वृद्धिर्न[2] । अगोपायीत् अगोपीत् अगौप्सीत् ॥ **झलो झलि ।८।२।२६।** झलः परस्य सस्य लोपो[3] झलि । अगौप्ताम् अगौप्सुः । अगौप्सीः अगौप्तम् अगौप्त । अगौप्सम् अगौप्स्व अगौप्स्म । अगोपायिष्यत् अगोपिष्यत् अगोप्स्यत् । क्षि क्षये १३ । क्षयति चिक्षाय चिक्षियतुः चिक्षियुः । एकाच इति निषेधे प्राप्ते ॥ **कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ।७।२।१३।** क्रादिभ्य एव लिट इण्न स्यादन्यस्मादनिटोऽपि स्यात् ॥ **अचस्तास्वत्थल्यनिटो नित्यम् ।७।२।६१।** उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततस्थल इण् न[4] ॥ **उपदेशेऽत्वतः ।७।२।६२।** उपदेशेऽकारवतस्तासौ यो नित्यानिट् ततः परस्य थल इण् न स्यात् ॥ **ऋतो भारद्वाजस्य ।७।२।६३।** तासौ नित्यानिट ऋदन्तादेव थलो नेड् भारद्वाजस्य मतेन । तेन अन्यस्य स्यादेव । अयमत्र संग्रहः ॥ अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् ॥ ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेट् भवेत् ॥ १ ॥

---

१ 'आर्धधातुकस्येड्वलादेः' इति सूत्रमनुवर्तते ॥ २ 'सिचि वृद्धिः–' इत्यतो वृद्धेरनुवृत्तिः ॥ ३ 'संयोगान्तस्य लोपः' 'रात्सस्य' इत्येताभ्यां लोपः सस्य इति चानुवर्तते ॥ ४ 'न वृद्भ्यः–' इत्यतो नेत्यस्यानुवृत्तिः ॥

चिक्षयिथ चिक्षेथ चिक्षियथुः चिक्षिय। चिक्षाय चिक्षय चिक्षियिव चिक्षियिम। क्षेता क्षेष्यति क्षयतु अक्षयत् क्षयेत्॥ **अकृत्सार्वधातुकयोर्दीर्घः** ।७।४।२५। अजन्ताङ्गस्य दीर्घो[1] यादौ प्रत्यये न तु कृत्सार्वधातुकयोः। क्षीयात्॥ **सिचि वृद्धिः परस्मैपदेषु** ।७।२।१। इगन्तस्याङ्गस्य वृद्धिः स्यात्परस्मैपदे सिचि। अक्षैषीत् अक्षेष्यत्। तप सन्तापे १४। तपति। तताप तेपतुः तेपुः। तेपिथ ततप्थ तप्ता तप्स्यति। तपतु अतपत् तपेत् तप्यात्। अताप्सीत् अताप्ताम् अतप्स्यत्। क्रमु पादविक्षेपे १५॥ **वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः** ।३।१।७०। एभ्यः[2] श्यन्वा कर्त्रर्थे[3] सार्वधातुके परे। पक्षे शप्॥ **क्रमः परस्मैपदेषु** ।७।३।७६। क्रमो दीर्घः परस्मैपदे शिति परे[4]। क्राम्यति क्रामति चक्राम क्रमिता क्रमिष्यति। क्राम्यतु क्रामतु अक्राम्यत् अक्रामत् क्राम्येत् क्रामेत् क्रम्यात् अक्रमीत् अक्रमिष्यत्। पा पाने १६ ॥ **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यच्छधौशीयसीदाः** ।७।३।७८। पादीनां पिबादयः स्युरित्संज्ञकशादौ प्रत्यये परे। पिबादेशोऽदन्तस्तेन न गुणः। पिबति॥ **आत औ णलः** ।७।१।३४। आदन्ताद्धातोर्णल औकारादेशः स्यात्। पपौ॥ **आतो लोप इटि च** ।६।४।६४। अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः। पपतुः पपुः। पपिथ पपाथ पपथुः पप। पपौ पपिव प-

---

१ 'अयङ् यि–' इत्यतो यीत्यस्यानुवृत्तिः॥ २ धातुभ्यः॥ ३ 'कर्तरि शप्' इत्यादिपूर्वसूत्रेभ्य एतदनुवर्तते॥ ४ 'ष्ठिवुक्लमु–' इत्यतः शितीत्यनुवर्तते॥

पिम । पाता पास्यति । पिबतु अपिबत् पिबेत् ॥ **एर्लिङि** ।६।४।६७। घुसंज्ञकानां मास्थादीनां च एत्वं स्यादार्धधातुके किति लिङि । पेयात् । गातिस्थेति सिचो लुक् । अपात् अपाताम् ॥ **आतः** ।३।४।११०। सिज्लुकि आदन्तादेव झेर्जुस् ॥ **उस्यपदान्तात्** ।६।१।९६। अपदान्तादकारादुसि पररूपमेकादेशः । अपुः अपास्यत् । ग्लै हर्षक्षये १७ । ग्लायति ॥ **आदेच उपदेशेऽशिति** ।६।१।४५। उपदेशे एजन्तस्य धातोरात्वं न तु शिति । जग्लौ ग्लाता ग्लास्यति ग्लायतु अग्लायत् ग्लायेत् ॥ **वान्यस्य संयोगादेः** ।६।४।६८। घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वार्धधातुके किति लिङि । ग्लेयात् ग्लायात् ॥ **यमरमनमातां सक् च** ।७।२।७३। एषां सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु । अग्लासीत् अग्लास्यत् । ह्वृ कौटिल्ये १८ । ह्वरति ॥ **ऋतश्च संयोगादेर्गुणः** ।७।४।१०। ऋदन्तस्य संयोगादेरङ्गस्य गुणो लिटि । उपधाया वृद्धिः । जह्वार जह्वरतुः जह्वरुः । जह्वर्थ जह्वरथुः जह्वर । जह्वार जह्वर जह्वरिव जह्वरिम । ह्वर्ता ॥ **ऋद्धनोः स्ये** ।७।२।७०। ऋतो हन्तेश्च स्यस्येट् । ह्वरिष्यति । ह्वरतु अह्वरत् ह्वरेत् ॥ **गुणोऽर्तिसंयोगाद्योः** ।७।४।२९। अर्तेः संयोगादेर्ऋदन्तस्य च गुणः स्यात् यकि यादावार्धधातुके लिङि च । ह्वर्यात् अह्वार्षीत् अह्वरिष्यत् । श्रु श्रवणे १९ ॥ **श्रुवः शृ च** ।३।१।७४। श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च । शृ-

---

१ 'घुमास्था–' इति पूर्वसूत्रस्यानुवृत्तिः ॥ २ 'सिजभ्यस्त–' इत्यतः सिच् 'झेर्जुस' इति सूत्रं चानुवर्तते ॥ ३ 'इडत्यर्ति–' 'स्तुसुधूञ्भ्यः' इत्याभ्यां इट् परस्मैपदेषु इत्यस्यानुवृत्तिः ॥ ४ 'दयतेर्दिगि–' इति पूर्वसूत्रादनुवृत्तिः ॥ ५ 'अयङ् यि–' इत्यादेरनुवृत्तिः ॥

णोति ॥ **सार्वधातुकमपित्** ।१।२।४। अपित्सार्वधातुकं ङिद्वत् । शृणुतः ॥ **हुश्नुवोः सार्वधातुके** ।६।४।८७। हुश्नुवोरनेकाचो[1]ऽसंयोगपूर्वस्योवर्णस्य यण् स्यादचि सार्वधातुके । शृण्वन्ति । शृणोषि शृणुथः शृणुथ । शृणोमि ॥ **लोपश्चास्यान्यतरस्यां म्वोः** ।६।४।१०७। असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा म्वोः परयोः । शृण्वः शृणुवः शृण्मः शृणुमः । शुश्राव शुश्रुवतुः शुश्रुवुः । शुश्रोथ शुश्रुवथुः शुश्रुव । शुश्राव शुश्रव शुश्रुव शुश्रुम । श्रोता श्रोष्यति । शृणोतु शृणुतात् शृणुताम् शृण्वन्तु ॥ **उतश्च प्रत्ययादसंयोगपूर्वात्** ।६।४।१०६। असंयोगपूर्वात्प्रत्ययादुतो हेर्लुक्[2] । शृणु शृणुतात् शृणुतम् शृणुत । गुणावादेशौ । शृणवानि शृणवाव शृणवाम । अशृणोत् अशृणुताम् अशृण्वन् । अशृणोः । अशृणुतम् अशृणुत । अशृणवम् अशृण्व अशृणुव अशृण्म अशृणुम । शृणुयात् शृणुयाताम् शृणुयुः । शृणुयाः शृणुयातम् शृणुयात । शृणुयाम् शृणुयाव । शृणुयाम । श्रूयात् अश्रौषीत् अश्रोष्यत् । गम्लृ गतौ २० ॥ **इषुगमियमां छः** ।७।३।७७। एषां छः स्यात् शिति[3] । गच्छति जगाम ॥ **गमहनजनखनघसां लोपः क्ङित्यनङि** ।६।४।९८। एषामुपधाया लोपोऽजादौ क्ङिति न त्वङि । जग्मतुः जग्मुः । जगमिथ जगन्थ जग्मथुः जग्म । जगाम जगम जग्मिव जग्मिम । गन्ता ॥ **गमेरिट् परस्मैपदेषु** ।७।२।५८। गमेः परस्य सादेरार्धधातुकस्येट् स्यात् परस्मैपदेषु । गमिष्यति गच्छतु अगच्छत् गच्छेत् गम्यात् ॥

---

१ 'एरनेकाच–'इत्यस्यानुवृत्तिः ॥ २ 'चिणो लुक्' 'अतो हेः' इत्यनयोरनुवृत्तिः ॥ ३ 'ष्ठिवुक्लमुचमां–' अस्माच्छितीत्यस्यानुवृत्तिः ॥

**पुषादिद्युताद्यॢदितः परस्मैपदेषु** ।३।१।५५। श्यन्विकरणपुषादेर्द्युतादेर्ऌदितश्च परस्य च्लेरङ् परस्मैपदेषु । अगमत् अगमिष्यत् । इति परस्मैपदिनः ॥ एध वृद्धौ १ ॥ **टित आत्मनेपदानां टेरे** ।३।४।७९। टितो लस्यात्मनेपदानां टेरेत्वम् । एधते ॥ **आतो ङितः** ।७।२।८१। आतः परस्य ङितामाकारस्य इय् स्यात् । एधेते एधन्ते ॥ **थासः से** ।३।४।८०। टितो लस्य थासः से स्यात् । एधसे एधेथे एधध्वे । अतो गुणे । एधे एधावहे एधामहे ॥ **इजादेश्च गुरुमतोऽनृच्छः** ।३।१।३६। इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि ॥ **आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य** ।१।३।६३। आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः । आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदम् ॥ **लिटस्तझयोरेशिरेच्** ।३।४।८१। लिडादेशयोस्तझयोरेशिरेचौ स्तः । एधाञ्चक्रे एधाञ्चक्राते एधाञ्चक्रिरे । एधाञ्चकृषे एधाञ्चक्राथे ॥ **इणः षीध्वंलुङ्लिटां धोऽङ्गात्** ।८।३।७८। इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य ढः स्यात् । एधाञ्चकृढ्वे । एधाञ्चक्रे एधाञ्चकृवहे एधाञ्चकृमहे । एधाम्बभूव एधामास । एधिता एधितारौ एधितारः । एधितासे एधितासाथे ॥ **धि च** ।८।२।२५। धादौ प्रत्यये परे सस्य लोपः । एधिताध्वे ॥ **ह एति** ।७।४।५२। तासस्त्योः सस्य हः स्यादेति परे । एधिताहे एधितास्वहे एधितास्महे । एधिष्यते एधिष्येते एधिष्यन्ते । एधिष्यसे एधिष्येथे एधिष्यध्वे । एधिष्ये एधिष्यावहे एधिष्यामहे ॥

---

१ 'च्लेः सिच्' इत्यतश्च्लेरिति 'अस्यतिवक्ति–' इत्यतः अङिति चानुवर्तते ॥ २ 'संयोगा–', 'रात्सस्य' इत्येताभ्यां लोपः सस्य इति चानुवर्तते ॥

**आमेतः** ।३।४।९०। लोट एकारस्याम् स्यात् । एधताम् एधेताम् एधन्ताम् ॥ **सवाभ्यां वामौ** ।३।४।९१। सवाभ्यां परस्य लोडेतः क्रमाद्वामौ स्तः । एधस्व एधेथाम् एधध्वम् ॥ **एत ऐ** ।३।४।९३। लोडुत्तमस्यैत ऐ स्यात् । एधै एधावहै एधामहै। आटश्च ऐधत ऐधेताम् ऐधन्त । ऐधथाः ऐधेथाम् । ऐधध्वम् । ऐधे ऐधावहि ऐधामहि ॥ **लिङः सीयुट्** ।३।४।१०२। सलोपः । एधेत एधेयाताम् ॥ **झस्य रन्** ।३।४।१०५। लिङो झस्य रन् स्यात् । एधेरन् । एधेथाः एधेयाथाम् एधेध्वम् ॥ **इटोऽत्** ।३।४।१०६। लिङादेशस्य इटोऽत्स्यात् । एधेय एधेवहि एधेमहि ॥ **सुट् तिथोः** ।३।४।१०७। लिङस्तथोः सुट् । यलोपः । आर्धधातुकत्वात्सलोपो न । एधिषीष्ट एधिषीयास्ताम् एधिषीरन् । एधिषीष्ठाः एधिषीयास्थाम् एधिषीध्वम् । एधिषीय एधिषीवहि एधिषीमहि । ऐधिष्ट ऐधिषाताम् ॥ **आत्मनेपदेष्वनतः** ।७।१।५। अनकारात्परस्यात्मनेपदेषु झस्य अत् इत्यादेशः स्यात् । ऐधिषत । ऐधिष्ठाः ऐधिषाथाम् ऐधिढ्वम् । ऐधिषि ऐधिष्वहि ऐधिष्महि । ऐधिष्यत ऐधिष्येताम् ऐधिष्यन्त । ऐधिष्यथाः ऐधिष्येथाम् ऐधिष्यध्वम् । ऐधिष्ये ऐधिष्यावहि ऐधिष्यामहि । कमु कान्तौ २ ॥ **कमेर्णिङ्** ।३।१।३०। स्वार्थे । ङित्त्वात्तङ् । कामयते ॥ **अयामन्ताल्वाय्येत्न्विष्णुषु** ।६।४।५५। आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात् । कामयाञ्चक्रे । आयादय इति णिङ् वा । चकमे चकमाते चकमिरे । चकमिषे चकमाथे चकमिढ्वे । चकमे चकमिवहे चकमिमहे । कामयिता काम-

---

१ 'झोन्तः,' 'अदभ्यस्तात्' एते अनुवर्तेते ॥

यितासे कमिता कामयिष्यते कमिष्यते । कामयताम् अकामयत कामयेत कामयिषीष्ट कमिषीष्ट ॥ **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** ।३।१।४८। ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात्कर्त्रर्थे लुङि परे । कामि अ त इति स्थिते ॥ **णेरनिटि** ।६।४।५१। अनिडादावार्धधातुके परे णेर्लोपः[1] स्यात् ॥ **णौ चङ्युपधाया ह्रस्वः**।७।४।१। चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् ॥ **चङि** ।६।१।११। चङि परे अनभ्यासस्य धात्ववयवस्यैकाचः[2] प्रथमस्य द्वे स्तोऽजादेर्द्वितीयस्य ॥ **सन्वल्लघुनि चङ्परेऽनग्लोपे** ।७।४।९३। चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति ॥ **सन्यतः** ।७।४।७९। अभ्यासस्यात इत्स्यात्सनि ॥ **दीर्घो लघोः** ।७।४।९४। लघोरभ्यासस्य दीर्घः स्यात् सन्वद्भावविषये । अचीकमत । णिङभावपक्षे ( कमेश्च्लेश्चङ् वाच्यः ) अचकमत अकामयिष्यत अकमिष्यत । अय गतौ ३ । अयते ॥ **उपसर्गस्यायतौ** ।८।२।१९। अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं[3] स्यात् । प्लायते पलायते ॥ **दयायासश्च** ।३।१।३७। दय् अय् आस् एभ्य आम् स्याल्लिटि । अयाञ्चक्रे अयिता अयिष्यते अयताम् आयत अयेत अयिषीष्ट ॥ **विभाषेटः** ।८।३।७९। इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा ढः । अयिषीध्वम् अयिषीढ्वम् । आयिष्ट आयिध्वम् आयिढ्वम् आयिष्यत । द्युत दीप्तौ ४ । द्योतते ॥ **द्युतिस्वाप्योः संप्रसारणम्** ।७।४।६७। अनयोरभ्यासस्य संप्रसारणं स्यात् । दिद्युते ॥

---

१ 'अतो लोपः' इत्यतो लोप इत्यनुवर्तते ॥ २ 'एकाचो द्वे प्रथमस्य' इत्यादिपूर्वसूत्रेभ्योऽनुवृत्तिः ॥ ३ 'कृपो रो लः' इत्यतो 'रः लः' इत्यनयोरनुवृत्तिः ॥

**द्युद्भ्यो लुङि।१।३।९१।** द्युतादिभ्यो लुङः परस्मैपदं वा स्याल्लुङि। पुषादीत्यङ्। अद्युतत् अद्योतिष्ट अद्योतिष्यत। एवं श्विता वर्णे ५। ञिमिदा स्नेहने ६। ञिष्विदा स्नेहनमोचनयोः ७। मोहनयोरित्येके। ञिक्ष्विदा चेत्येके। रुच दीप्तावभिप्रीतौ च ८। घुट परिवर्तने ९। शुभ दीप्तौ १०। क्षुभ संचलने ११। णभ तुभ हिंसायाम् १२।१३। स्रंसु भ्रंसु ध्वंसु अवस्रंसने १४।१५।१६। ध्वंसु गतौ १७। स्रंभु विश्वासे १८। वृतु वर्तने १९। वर्तते ववृते वर्तिता॥ **वृद्भ्यः स्यसनोः।१।३।९२।** वृतादिभ्यः पञ्चभ्यो वा[1] परस्मैपदं स्यात्स्ये सनि च॥ **न वृद्भ्यश्चतुर्भ्यः।७।२।५९।** वृतुवृधुशृधुस्यन्दूभ्यः सकारादेरार्धधातुकस्येण्न[2] स्यात्तङानयोरभावे। वर्त्स्यति वर्तिष्यते। वर्तताम् अवर्तत वर्तेत वर्तिषीष्ट अवृतत् अवर्तिष्ट अवर्त्स्यत् अवर्तिष्यत। दद दाने २०। ददते॥ **न शसददवादिगुणानाम्।६।४।१२६।** शसेर्ददेर्वकारादीनां गुणशब्देन विहितो योऽकारस्तस्यैत्वाभ्यासलोपौ[3] न। ददते ददाते ददिरे। ददिता ददिष्यते ददताम् अददत ददेत ददिषीष्ट अददिष्ट अददिष्यत। त्रपूष् लज्जायाम् २१। त्रपते॥ **तॄफलभजत्रपश्च।६।४।१२२।** एषामत एत्वमभ्यासलोपश्च स्यात्किति लिटि सेटि थलि च। त्रेपे त्रपिता त्रप्ता त्रपिष्यते त्रप्स्यते त्रपताम् अत्रपत त्रपेत त्रपिषीष्ट त्रप्सीष्ट अत्रपिष्ट अत्रप्त अत्रपिष्यत अत्रप्स्यत॥ इत्यात्मनेपदिनः॥ श्रिञ् सेवायाम् १। श्रयति श्रयते शिश्राय शिश्रिये श्रयिता श्रयिष्यति श्रयिष्यते श्र-

---

१ 'शेषात्कर्तरि–' 'वा क्यषः–' इत्येताभ्यां परस्मैपदं वेति चानुवर्तते॥ २ 'सेसिचि–' 'गमेरिट्–' इति पूर्वसूत्रयोरनुवृत्तिः॥ ३ 'थ्वसोरेद्धावभ्यासलोपश्च' इत्यतोऽनुवृत्तिः॥

यतु श्रयताम् अश्रयत् अश्रयत श्रयेत् श्रयेत श्रीयात् श्रयिषीष्ट । चङ् । अशिश्रियत् अशिश्रियत अश्रयिष्यत् अश्रयिष्यत । भृञ् भरणे २ । भरति भरते बभार बभ्रतुः बभ्रुः । बभर्थ बभृव बभृम । बभ्रे बभृषे भर्तासि भर्तासे भरिष्यति भरिष्यते भरतु भरताम् अभरत् अभरत भरेत् भरेत ॥ **रिङ् शयग्लिङ्क्षु** ।७।४।२८। शे यकि यादावार्धधातुके लिङि च ऋतो रिङादेशः स्यात् । रीङि प्रकृते रिङ्विधानसामर्थ्याद्दीर्घो न । भ्रियात् ॥ **उश्च** ।१।२।१२। ऋवर्णात्परौ लिङ्सिचौ[1] कितौ स्तस्तङि । भृषीष्ट भृषीयास्ताम् अभार्षीत् ॥ **ह्रस्वादङ्गात्** ।८।२।२७। सिचो लोपो झलि । अभृत अभृषाताम् अभरिष्यत् अभरिष्यत । हृञ् हरणे ३ । हरति हरते जहार जह्रे जहर्थ जह्रिव जह्रिम जहृषे हर्ता हरिष्यति हरिष्यते हरतु हरताम् अहरत् अहरत हरेत् हरेत ह्रियात् हृषीष्ट हृषीयास्ताम् अहार्षीत् अहृत अहरिष्यत् अहरिष्यत । धृञ् धारणे ४ । धरति धरते । णीञ् प्रापणे ५ । नयति नयते । डुपचष् पाके ६ । पचति पचते पपाच पेचिथ पपक्थ पेचे पक्ता । भज सेवायाम् ७ । भजति भजते बभाज भेजे भक्ता भक्ष्यति भक्ष्यते अभाक्षीत् अभक्त अभक्षाताम् । यज देवपूजासंगतिकरणदानेषु ८ । यजति यजते ॥ **लिट्यभ्यासस्योभयेषाम्** ।६।१।१७। वच्यादीनां ग्रह्यादीनां चाभ्यासस्य संप्रसारणं लिटि । इयाज ॥ **वचिस्वपियजादीनां किति** ।६।१।१५। वचिस्वप्योर्यजादीनां च संप्रसारणं[2] स्यात्किति । ई-

---

१ 'लिङ्सिचौ–'इति पूर्वसूत्रमनुवर्तते ॥ २ 'ष्यङः संप्रसारणं' इत्यतः संप्रसारणमित्यस्यानुवृत्तिः ॥

जतुः ईजुः इयजिथ इयष्ठ ईजे यष्टा । षढोः कः सि । यक्ष्यति यक्ष्यते इज्यात् यक्षीष्ट अयाक्षीत् अयष्ट । वह प्रापणे ९ । वहति वहते । उवाह ऊहतुः ऊहुः । उवहिथ ॥ **झषस्तथोर्धोऽधः ।८।२।४०।** झषः परयोस्तथोर्धः स्यान्न तु दधातेः । ढो ढे लोपः ॥ **सहिवहोरोदवर्णस्य ।६।३।११२।** अनयोरवर्णस्य ओत्स्याड्ढलोपे । उवोढ ऊहे वोढा वक्ष्यति । अवाक्षीत् अवोढाम् अवाक्षुः । अवाक्षीः अवोढम् अवोढ । अवाक्षम् अवाक्ष्व अवाक्ष्म । अवोढ अवक्षाताम् अवक्षत । अवोढाः अवक्षाथाम् अवोढ्वम् । अवक्षि अवक्ष्वहि अवक्ष्महि । इति भ्वादयः ॥

## ॥ अथ तिङन्ते अदादिगणप्रकरणम् ॥

अद भक्षणे १ ॥ **अदिप्रभृतिभ्यः शपः ।२।४।७२।** लुक् स्यात् । अत्ति अत्तः अदन्ति । अत्सि अत्थः अत्थ । अद्मि अद्वः अद्मः ॥ **लिट्यन्यतरस्याम् ।२।४।४०।** अदो घस्लृ वा स्याल्लिटि । जघास । उपधालोपः । घस्य चर्त्वम् ॥ **शासिवसिघसीनां च ।८।३।६०।** इण्कुभ्यां परस्यैषां सस्य षः स्यात् । जक्षतुः । जक्षुः । जघसिथ जक्षथुः जक्ष । जघास जघस जक्षिव जक्षिम । आद आदतुः । आदुः ॥ **इडत्यर्तिव्ययतीनाम् ।७।२।६६।** अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात् । आदिथ अत्ता अत्स्यति अत्तु अत्तात् अत्ताम् अदन्तु ॥ **हुझल्भ्यो हेर्धिः ।३।४।१०१।** होर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि अत्तात् अत्तम् अत्त । अदानि अदाव अदाम ॥ **अदः सर्वेषाम् ।७।३।१००।**

१ 'अदो जग्धि–' इत्यतः अद इति 'लुङ्सनोर्घस्लृ' इत्यतो घस्लृ इति चानुवर्तते ॥

अदः परस्यापृक्तसार्वधातुकस्य अट् स्यात्सर्वमतेन । आदत् । आत्ताम् आदन् । आदः आत्तम् आत्त । आदम् आद्व आद्म । अद्यात् । अद्याताम् । अद्युः । अद्यात् अद्यास्ताम् अद्यासुः ॥ **लुङ्सनोर्घस्ऌ ।२।४।३७।** अदो घस्ऌ स्याल्लुङि सनि च । ऌदित्त्वादङ् । अघसत् आत्स्यत् । हन हिंसागत्योः २ । हन्ति ॥ **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ।६।४।३७।** अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ किति ङिति परे । यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः । तनुषणुक्षणुक्षिणुऋणुतृणुघृणुवनुमनु तनोत्यादयः । हतः घ्नन्ति । हंसि हथः हथ । हन्मि हन्वः हन्मः । जघान जघ्नतुः जघ्नुः ॥ **अभ्यासाच्च ।७।३।५५।** अभ्यासात्परस्य हन्तेर्हस्य[1] कुत्वं स्यात् । जघनिथ जघन्थ जघ्नथुः जघ्न । जघान जघन जघ्निव जघ्निम । हन्ता हनिष्यति हन्तु हतात् हताम् घ्नन्तु ॥ **हन्तेर्जः ।६।४।३६।** हौ परे ॥ **असिद्धवदत्राभात् ।६।४।२२।** इत ऊर्ध्वमापादसमाप्तेराभीयं । समानाश्रये तस्मिन्कर्तव्ये तदसिद्धम् । इति जस्यासिद्धत्वान्न हेर्लुक् । जहि हतात् हतम् हत । हनानि हनाव हनाम । अहन् अहताम् अघ्नन् । अहन् अहतम् अहत । अहनम् अहन्व अहन्म । हन्यात् ॥ **आर्धधातुके ।२।४।३५।** इत्यधिकृत्य ॥ **हनो वध लिङि ।२।४।४२।** **लुङि च ।२।४।४३।** वधादेशोऽदन्तः । आर्धधातुके इति विषयसप्तमी । तेनार्धधातुकोपदेशे अकारान्तत्वादतो लोपः । वध्यात् वध्यास्ताम् अवधीत् अहनिष्यत् । यु मिश्रणामिश्रणयोः ३ ॥ **उतो**

---

[1] 'चजोः कु–' 'हो हन्तेः' इत्येतयोरनुवृत्तिः ॥

**वृद्धिर्लुकि हलि ।७।३।८९।** लुग्विषये उतो वृद्धिः पिति हलादौ सार्वधातुके न त्वभ्यस्तस्य । यौति युतः युवन्ति । यौषि युथः युथ । यौमि युवः युमः । युयाव यविता यविष्यति यौतु युतात् अयौत् अयुताम् अयुवन् युयात् । इह उतो वृद्धिर्न । भाष्ये पिच्च ङिन्न ङिच्च पिन्नेति व्याख्यानात् । युयाताम् युयुः । यूयात् यूयास्ताम् यूयासुः । अयावीत् अयविष्यत् । या प्रापणे ४। याति यातः यान्ति । ययौ याता यास्यति यातु अयात् अयाताम् ॥ **लङः शाकटायनस्यैव ।३।४।१११।** आदन्तात्परस्य लङो झेर्जुस् वा स्यात् । अयुः अयान् । यायात् यायाताम् यायुः । यायात् यायास्ताम् यायासुः । अयासीत् अयास्यत् । वा गतिगन्धनयोः ५। भा दीप्तौ ६। ष्णा शौचे ७। श्रा पाके ८। द्रा कुत्सायां गतौ ९। प्सा भक्षणे १०। रा दाने ११। ला आदाने १२। दाप् लवने १३। ख्या प्रकथने १४। अयं सार्वधातुके एव प्रयोक्तव्यः । विद ज्ञाने १५ ॥ **विदो लटो वा ।३।४।८३।** वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः । वेद विदतुः विदुः । वेत्थ विदथुः विद । वेद विद्व विद्म । पक्षे वेत्ति वित्तः विदन्ति ॥ **उषविदजागृभ्योऽन्यतरस्याम् ।३।१।३८।** एभ्यो लिट्यास्वा स्यात् । विदेरदन्तत्वप्रतिज्ञानादामि न गुणः । विदाञ्चकार विवेद वेदिता वेदिष्यति ॥ **विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ।३।१।४१।** वेत्तेर्लोटि आम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने न विवक्षिते । विदांक-

---

१ 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति सूत्रमनुवर्तते ॥ २ 'आत' इति पूर्वसूत्रमनुवर्तते ॥

रोतु वेत्तु ॥ **तनादिकृञ्भ्य उः** ।३।१।७९। तनादेः कृञश्च उः प्रत्ययः स्यात् । शपोऽपवादः ॥ **अत उत्सार्वधातुके** ।६।४।११०। उप्रत्ययान्तस्य कृञोऽत उत्सार्वधातुके क्ङिति । विदाङ्कुरुतात् विदाङ्कुरुताम् विदाङ्कुर्वन्तु । विदाङ्कुरु विदाङ्करवाणि । अवेत् अवित्ताम् अविदुः ॥ **दश्च** ।८।२।७५। धातोर्दस्य पदान्तस्य सिपि परे रुर्वा । अवेः अवेत् विद्यात् विद्यास्ताम् अवेदीत् अवेदिष्यत् । अस भुवि १६ । अस्ति ॥ **श्नसोरल्लोपः** ।६।४।१११। श्नस्यास्तेश्चातो लोपः सार्वधातुके क्ङिति । स्तः सन्ति । असि स्थः स्थ । अस्मि स्वः स्मः ॥ **उपसर्गप्रादुर्भ्यामस्तिर्यच्परः** ।८।३।८७। उपसर्गेण प्रादुसश्चास्तेः सस्य षो[1] यकारेऽचि च परे । निष्यात् प्रनिषन्ति प्रादुःषन्ति । यच्परः किम् । अभिस्तः ॥ **अस्तेर्भूः** ।२।४।५२। आर्धधातुके । बभूव भविता भविष्यति । अस्तु स्तात् स्ताम् सन्तु ॥ **घ्वसोरेद्धावभ्यासलोपश्च** ।६।४।११९। घोरस्तेश्च एत्वं स्यात् हौ परे अभ्यासलोपश्च । एत्वस्यासिद्धत्वाद्धेर्धिः । श्नसोरित्यल्लोपः । तातङ्पक्षे एत्वं न । परेण तातङा बाधात् । एधि स्तात् स्तम् स्त । असानि असाव असाम । आसीत् आस्ताम् आसन् । स्यात् स्याताम् स्युः । भूयात् अभूत् अभविष्यत् । इण् गतौ १७ । एति इतः ॥ **इणो यण्** ।६।४।८१। अजादौ प्रत्यये परे । यन्ति ॥ **अभ्यासस्यासवर्णे** ।६।४।७८। इउवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि । इयाय ॥ **दीर्घ इणः किति** ।७।४।६९। इणोऽभ्यासस्य दीर्घः स्यात्

---

१ 'अपदान्तस्य मूर्धन्यः' इत्यस्मान्मूर्धन्य इत्यस्यानुवृत्तिः ॥ २ 'अचि श्नु–' इत्यस्मात् य्वोरियङुवङौ इत्यनुवर्तते ॥

किति लिटि । ईयतुः ईयुः इययिथ इयेथ एष्यति एतु । ऐत् ऐताम् आयन् । इयात् ॥ **एतेर्लिङि ।७।४।२४।** उपसर्गात्परस्य इणोऽणो ह्रस्व आर्धधातुके किति लिङि । निरियात् उभयत आश्रयणे[3] नान्तादिवत् । अभीयात् । अणः किम् । समेयात् ॥ **इणो गा लुङि ।२।४।४५।** गातिस्थेति सिचो लुक् । अगात् ऐष्यत् । शीङ् स्वप्ने १८ ॥ **शीङः सार्वधातुके गुणः ।७।४।२१।** क्ङिति चेत्यस्यापवादः । शेते शयाते ॥ **शीङो रुट् ।७।१।६।** शीङः परस्य झादेशस्यातो[3] रुडागमः स्यात् । शेरते । शेषे शयाथे शेध्वे । शये शेवहे शेमहे । शिश्ये शिश्याते शिश्यिरे । शयिता । शयिष्यते शेताम् शयाताम् । अशेत अशयाताम् अशेरत । शयीत शयीयाताम् शयीरन् । शयिषीष्ट अशयिष्ट अशयिष्यत । इङ् अध्ययने १९ । इङिकावध्युपसर्गतो न व्यभिचरतः । अधीते अधीयाते अधीयते ॥ **गाङ् लिटि ।२।४।४९।** इङो गाङ् स्याल्लिटि । अधिजगे अधिजगाते अधिजगिरे । अध्येता अध्येष्यते । अधीताम् अधीयाताम् अधीयताम् । अधीष्व अधीयाथाम् अधीध्वम् । अध्ययै अध्ययावहै अध्ययामहै । अध्यैत अध्यैयाताम् अध्यैयत । अध्यैथाः अध्यैयाथाम् अध्यैध्वम् । अध्यैयि अध्यैवहि अध्यैमहि । अधीयीत अधीयीयाताम् अधीयीरन् । अध्येषीष्ट ॥ **विभाषा लुङ्लृङोः ।२।४।५०।** इङो

---

१ 'उपसर्गाद्ध्रस्व–' इति पूर्वसूत्रमनुवर्तते ॥ २ तेनात्र 'एतेर्लिङि' इत्यस्य प्राप्तिर्न भवति ॥ ३ 'झोऽन्तः' इत्यतो झ इति 'अदभ्यस्तात्' इत्यतः अत् इति चानुवर्तते । तत्र अदित्यस्येष्टानुरोधात्षष्ठ्यन्तत्वेन विपरिणामः ॥ ४ 'इङश्च' इति सूत्रमनुवर्तते ॥

गाङ् वा स्यात् ॥ **गाङ्कुटादिभ्योऽञ्णिन्ङित्** ।१।२।१। गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः ॥ **घुमास्थागापाजहातिसां हलि** ।६।४।६६। एषामात ईत्स्याद्धलादौ क्ङित्यार्धधातुके । अध्यगीष्ट अध्यैष्ट अध्यगीष्यत अध्यैष्यत । दुह प्रपूरणे २० । दोग्धि दुग्धः दुहन्ति । धोक्षि । दुग्धे दुहाते दुहते । धुक्षे दुहाथे धुग्ध्वे । दुहे दुह्वहे दुह्महे । दुदोह दुदुहे दोग्धा धोक्ष्यति । धोक्ष्यते । दोग्धु दुग्धात् दुग्धाम् दुहन्तु । दुग्धि दुग्धात् दुग्धम् दुग्ध । दोहानि । दुग्धाम् दुहाताम् दुहताम् । धुक्ष्व दुहाथाम् दुग्ध्वम् । दोहै दोहावहै दोहामहै । अधोक् अदुग्धाम् अदुहन् । अदोहम् । अदुग्ध अदुहाताम् अदुहत । अधुग्ध्वम् दुह्यात् दुहीत ॥ **लिङ्सिचावात्मनेपदेषु** ।१।२।११। इक्समीपाद्धलः परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । धुक्षीष्ट ॥ **शल इगुपधादनिटः क्सः** ।३।१।४५। इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात् । अधुक्षत् ॥ **लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये** ।७।३।७३। एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि । अदुग्ध अधुक्षत ॥ **क्सस्याचि** ।७।३।७२। अजादौ तङि क्सस्य लोपः । अधुक्षाताम् अधुक्षन्त । अदुग्धाः अधुक्षथाः अधुक्षाथाम् अधुग्ध्वम् अधुक्षध्वम् । अधुक्षि अदुह्वहि अधुक्षावहि अधुक्षामहि । अधोक्ष्यत । एवं दिह उपचये २१ । लिह आस्वादने २२ । लेढि लीढः लिहन्ति । लेक्षि । लीढे लिहाते लिहते । लिक्षे लिहाथे लीढ्वे । लिलेह लिलिहे । लीढासि लीढासे । लेक्ष्यति लेक्ष्यते । लेढु लीढात्

१ 'असंयोगाल्लिट् कित्' इत्यस्मात्किदित्यनुवर्तते ॥

लीढाम् लिहन्तु । लीढि लेहानि लीढाम् अलेट् अलेड् अलिक्षत् अलिक्षत अलीढ । अलेक्ष्यत् अलेक्ष्यत । ब्रूञ् व्यक्तायां वाचि २३ ॥ **ब्रुवः पञ्चानामादित आहो ब्रुवः** ।३।४।८४। ब्रुवो लॅटस्तिबादीनां पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः । आह आहतुः आहुः ॥ **आहस्थः** ।८।२।३५। झलि परे । चर्त्वम् । आत्थ आहथुः ॥ **ब्रुव ईट्** ।७।३।९३। ब्रुवः परस्य हॅलादेः पित ईट् स्यात् । ब्रवीति ब्रूतः ब्रुवन्ति । ब्रूते ब्रुवाते ब्रुवते ॥ **ब्रुवो वचिः** ।२।४।५३। आर्धधातुके । उवाच ऊचतुः ऊचुः । उवचिथ उवक्थ ऊचे वक्ता वक्ष्यति वक्ष्यते । ब्रवीतु ब्रूतात् ब्रुवन्तु । ब्रूहि ब्रवाणि ब्रूताम् ब्रवै अब्रवीत् अब्रूत ब्रूयात् ब्रुवीत उच्यात् वक्षीष्ट ॥ **अस्यतिवक्तिख्यातिभ्योऽङ्** ।३।१।५२। एभ्यश्च्लेरङ् स्यात् ॥ **वच उम्** ।७।४।२०। अङि परे । अवोचत् अवोचत । अवक्ष्यत् अवक्ष्यत । ( चर्करीतं च ) चर्करीतमिति यङ्लुगन्तं अदादौ बोध्यम् । ऊर्णुञ् आच्छादने २४ ॥ **ऊर्णोतेर्विभाषा** ।७।३।९०। वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके । ऊर्णौति ऊर्णोति ऊर्णुतः ऊर्णुवन्ति । ऊर्णुते ऊर्णुवाते ऊर्णुवते । ( ऊर्णोतेराम्नेति वाच्यम् ) ॥ **न न्द्राः संयोगादयः** ।६।१।३। अचः पराः संयोगादयो नदरा द्विर्न भवन्ति । नुशब्दस्य द्वित्वम् । ऊर्णुनाव ऊर्णुनुवतुः ऊर्णुनुवुः ॥ **विभाषोर्णोः** ।१।२।३। इडादिप्रत्ययो वा ङित्स्यात् । ऊर्णुनुविथ ऊर्णुनविथ ।

---

१ 'परस्मैपदानां–' इति 'विदो लटो वा' इत्यस्माल्लटो वा इति चानुवर्तते ॥ २ 'नाभ्यस्तस्य–' इत्यस्मात्पितीति 'उतो वृद्धिः' इत्यस्माद्धलीति चानुवर्तते ॥

ऊर्णुविता ऊर्णविता । ऊर्णुविष्यति ऊर्णविष्यति । ऊर्णोतु ऊर्णौतु । ऊर्णवानि ऊर्णवै ॥ **गुणोऽपृक्ते ।७।३।९१।** ऊर्णोतेर्गुणोऽपृक्ते हलादौ पिति सार्वधातुके । वृद्ध्यपवादः । और्णोत् और्णोः ऊर्णुयात् ऊर्णुयाः ऊर्णुवीत ऊर्णुयात् ऊर्णुविषीष्ट ऊर्णविषीष्ट ॥ **ऊर्णोतेर्विभाषा ।७।२।६।** इडादौ परस्मैपदपरे सिचि वा वृद्धिः । पक्षे गुणः । और्णावीत् और्णवीत् और्णुवीत् और्णाविष्टाम् । और्णविष्टाम् और्णुविष्टाम् । और्णविष्ट और्णुविष्ट । और्णविष्यत् और्णुविष्यत् ॥ इत्यदादयः ॥

## ॥ अथ तिङन्ते जुहोत्यादिगणप्रकरणम् ॥

हु दानादनयोः १ ॥ **जुहोत्यादिभ्यः श्लुः ।२।४।७५।** शपः श्लुः स्यात् ॥ **श्लौ ।६।१।१०।** धातोर्द्वे स्तः । जुहोति जुहुतः ॥ **अदभ्यस्तात् ।७।१।४।** झस्य । हुश्नुवोरिति यण् । जुह्वति ॥ **भीह्रीभृहुवां श्लुवच्च ।३।१।३९।** एभ्यो लिट्याम्वा स्यादामि श्लाविव कार्यं च । जुहवाञ्चकार जुहाव होता होष्यति । जुहोतु जुहुतात् जुहुताम् जुह्वतु । जुहुधि जुहवानि । अजुहोत् अजुहुताम् ॥ **जुसि च ।७।३।८३।** इगन्ताङ्गस्य गुणोऽजादौ जुसि । अजुहवुः जुहुयात् हूयात् अहौषीत् अहोष्यत् । ञिभी भये २ । बिभेति ॥ **भियोऽन्यतरस्याम् ।६।४।११५।** इकारः स्याद्धलादौ क्ङिति सार्वधातुके । बिभीतः बिभितः बिभ्यति । बिभयाञ्चकार बिभाय । भेता भेष्यति बिभेतु बिभितात् बिभीतात् अबिभेत् । बिभियात् बिभीयात् । भीयात् अभैषीत् अभेष्यत् । ह्री लज्जायाम् ३ । जिह्रेति जिह्रीतः जिह्रीयति । जि-

१ 'मिदेर्गुणः' इत्यस्माद्गुण इति 'क्सस्याचि' इत्यस्मादचीति चानुवर्तते ॥

ह्रयाञ्चकार जिह्राय ह्रेता ह्रेष्यति जिह्रेतु अजिह्रेत् जिह्रीयात् अह्रैषीत् अह्रेष्यत् । पॄ पालनपूरणयोः ४ ॥ **अर्तिपिपर्त्योश्च** ।७।४।७७। अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ । पिपर्ति ॥ **उदोष्ठ्यपूर्वस्य** ।७।१।१०२। अङ्गावयवौष्ठ्यपूर्वो य ऋत्तदन्तस्याङ्गस्य उत्स्यात् ॥ **हलि च** ।८।२।७७। रेफवान्तस्य धातोरुपधाया[1] इको दीर्घो हलि । पिपूर्तः पिपुरति । पपार ॥ **शॄदॄप्रां ह्रस्वो वा** ।७।४।१२। एषां किति लिटि ह्रस्वो वा स्यात् । पप्रतुः ॥ **ऋच्छत्यॄताम्** ।७।४।११। तौदादिकऋच्छेर्ऋधातोर्ॠतां च गुणो लिटि । पपरतुः[2] पपरुः ॥ **वॄतो वा** ।७।२।३८। वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि । परिता परीता । परिष्यति परीष्यति पिपर्तु । अपिपः अपिपूर्ताम् अपिपरुः । पिपूर्यात् पूर्यात् अपारीत् ॥ **सिचि च परस्मैपदेषु** ।७।२।४०। अत्र इटो न दीर्घः । अपारिष्टाम् अपरीष्यत् अपरिष्यत् ॥ ओहाक् त्यागे ५ । जहाति ॥ **जहातेश्च** ।६।४।११६। इद्वा स्याद्धलादौ क्ङिति सार्वधातुके । जहितः ॥ **ई हल्यघोः** ।६।४।११३। श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि न तु घोः[3] । जहीतः ॥ **श्नाभ्यस्तयोरातः** ।६।४।११२। अनयोरातो लोपः क्ङिति सार्वधातुके । जहति जहौ हाता हास्यति । जहातु जहितात् जहीतात् ॥ **आ च हौ** ।६।४।११७। जहातेर्हौ परे आ स्याच्चादिदीतौ । जहाहि जहिहि जहीहि । अजहात् अजहुः ॥ **लोपो यि** ।६।४।११८। जहातेरालोपो यादौ सार्वधातुके । जह्यात् । एर्लिङि ।

---

१ 'र्वोरुपधाया–' इत्यनुवर्तते ॥ २ पपरतुरिति पक्षान्तरे ॥ ३ दाधाघ्वदाबिति विहितघुसंज्ञस्येत्यर्थः ॥

